Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दृग्निर्देवानामन्नादो यमः पितृणाꣳ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति सकृत्सकृदवद्यति सकृदिव हि रुद्र उत्तरार्धादवद्यत्येषा वै रुद्रस्य (४) दिक् स्वायामेव दिशि रुद्रं निरवदयते द्विरभिघारयति चतुरवत्तस्याप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत् पूर्वा आहुतीरभिजुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय — ३७) [शस्तः स्पर्शयति भूतानामग्निꣳ रुद्रस्य सप्तत्रिꣳशच्च]॥६॥

मनुः पृथिव्या यज्ञियमैच्छत् स घृतं निषिक्तमविन्दत् सोऽब्रवीत् कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवावमीश्वरौ कर्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्मोपहूतꣳ रथन्तरꣳ सह पृथिव्येत्याह (१) इयं वै रथन्तरमिमामेव सहान्नाद्येनोपह्वयत उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोपह्वयत उपहूतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोपह्वयत उपहूताः सप्त होत्रा इत्याह होत्रा एवोपह्वयत उपहूता धेनुः (२) सहर्षभेत्याह मिथुनमेवोपह्वयत उपहूतो भक्षः सखेत्याह सोमपीथमेवोपह्वयत उपहूताꣳ३ हो इत्याहात्मानमेवोपह्वयत आत्मा ह्युपहूतानां वसिष्ठ इडामुपह्वयते पशवो वा इडा पशूनेवोपह्वयते चतुरुपह्वयते चतुष्पादो हि पशवो मानवीत्याह मनुर्ह्येतामग्रेऽप- (३)

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्यद्घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ
समैरयतां ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोपह्वयते दैव्या अध्वर्यव उपहूता उपहूता मनुष्या
इत्याह देवमनुष्यानेवोपह्वयते य इमं यज्ञमवान् ये यज्ञपतिं वर्धानित्याह (४) यज्ञाय चैव
यजमानाय चाशिषमाशास्त उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोपह्वयते पूर्वजे
ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे उपहूतोऽयं
यजमान इत्याह यजमानमेवोपह्वयत उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो
दिव्ये धामन्नुपहूतः (५) इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो
लोको दिव्यं धामेदमसीदमसीत्येव यज्ञस्य प्रियं धामोपह्वयते विश्वमस्य प्रियमुपहूतमि-
त्याहाछम्बट्कारमेवोपह्वयते — ३४) [ आह धेनुरेतामाहोपहूतश्चतुस्त्रिꣳशच्च ] ॥ ७ ॥

पशवो वा इडा स्वयमादत्ते काममेवात्मना पशूनामादत्ते न ह्यन्यः कामं पशूनां प्रयच्छति
वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्रा-
श्नामीत्याह स्वगाकृत्यै चतुरवत्तं भवति हविर्वै चतुरवत्तं पशवश्चतुरवत्तं यद्धोता प्राश्नीया-
द्धोता (१) आर्तिमार्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्याद्वाचस्पत-
ये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगा-
कृत्यै प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां ददाति तीर्थ एव दक्षिणां ददाति वि वा एत-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यज्ञम् ( २ ) छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सन्तन्वन्ति देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत्तं देवा अभिसमगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत् स्विष्टकृतः स्विष्टकृत्त्वं तस्याविद्धं निः ( ३ ) अकृन्तन् यवेन सम्मितं तस्माद्यवमात्रमवद्येद्यज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्य यदुप च स्तृणीयादभि च घारयेदुभयतःसꣳश्वायि कुर्यादवदायाभिघारयति द्विः सम्पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै यत्तिरश्चीनमतिहरेदनभिविद्धं यज्ञस्याभिविध्येदग्रेण परिहरति तीर्थेनैव परिहरति तत् पूष्णे पर्यहरन् तत् ( ४ ) पूषा प्राश्य दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागो ऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमारिष्यतीति स एतं मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्यब्रवीन्न हि सूर्यस्य चक्षुः ( ५ ) किंचन हिनस्ति सोऽबिभेत् प्रतिगृह्णन्तं मा हिꣳसिष्यतीति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीत्यब्रवीत् सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णात् सोऽबिभेत् प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वास्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किंचन हिनस्ति सोऽबिभेत् ( ६ ) प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किंचन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्र-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ह्निष्ठोऽप वा एतस्मात् प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सम्मृशते ऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुपह्वयते—४४ ) [होता यज्ञं निष्टच्चक्षु रविभे्च्चतु-श्चत्वारिꣳशच्च] ॥ ८ ॥ अग्नीध आदधात्यग्निमुखानेवर्तून् प्रीणाति समिधमादधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्वत्येव जुहोति परिधीन्त्सम्मार्ष्टि पुनात्येवैनान्त्सकृत्सकृत् सम्मार्ष्टि पराङिव ह्येतर्हि यज्ञश्चतुः सम्पद्यते चतुष्पादः पशवः पशूनेवावरुन्धे ब्रह्मन् प्रस्थास्याम इत्याहात्र वा एतर्हि यज्ञः श्रितः ( १ ) यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमारभते यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत्तूष्णीमासीतासम्प्रत्तो यज्ञः स्यात् प्रतिष्ठेत्येव ब्रूयाद्वाचि-वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्तत एवैनꣳ सम्प्रयच्छति देवसवितरेतत्ते प्र ( २ ) आहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायात्मने तेभ्य एवाशिषमाशास्तेऽनार्त्या आश्राव्याह देवान् यजेति ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम एते देवा इति छन्दाꣳसीति ब्रूयाद्गाय-त्रीं त्रिष्टुभम् ( ३ ) जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दाꣳसीति तानेव तद्यजति दे-वानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत्तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यद-नूयाजान् यजत्यग्निमेव तत्समिन्ध एतदुर्वै नामासुर आसीत् स एतर्हि यज्ञस्याशिषमवृङ्क्त य-द्ब्रूयादेतत् ( ४ ) उ द्यावापृथिवी भद्रमभूदित्येतदुमेवासुरं यज्ञस्याशिषं गमयेदिदं द्यावापृथि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याशिषं गमयत्याघ्मं सूक्तवाकमुत नमोवाकमि-त्याहेदमराल्स्मेति वावैतदाहोपश्रितो दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित-ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी ( ५ ) स्तामित्याहाशिषमेवैतामाशास्ते यद्ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्याद्यदा हि प्रमीयतेऽथेमामुपाव-स्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमाशास्ते न प्रमायुको भवति तयोराविद्यग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म ( ६ ) देवतास्ता अरीरधामेति वावैतदाह यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेदाशास्तेऽयं यजमानोऽसावित्याह निर्दि-श्यैवैनꣳ सुवर्गं लोकं गमयत्यायुराशास्ते सुप्रजास्त्वमाशास्त इत्याहाशिषमेवैतामाशास्ते स-जातवनस्यामाशास्त इत्याह प्राणा वै संजाताः प्राणानेव ( ७ ) नान्तरेति तदग्निर्देवो दे-वेभ्यो वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाहेह गति-वामस्येदञ्च नमो देवेभ्य इत्याह याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्या-त्मनोऽनार्त्यै—४६ ) [ श्रितः प्र त्रिष्टुभमेतद्यावापृथिवी अयाक्ष्मै व षट्चत्वारिꣳशच्च ] ॥९॥

देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याशीरसदिति तस्माद्य-दब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याशीर्गच्छत्येतन्ममेत्यब्रवीत्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



किं मैं प्रजायाः ( १ ) इति योऽपगुरातै शतेन यातयाद्यो निहनत् सहस्रेण यातयाद्यो लोहितं कुरवद्यावतः प्रस्कद्य पांसून्त्संगृह्णात्तावतः संवत्सरान् पितृलोकं न प्रजानादिति तस्माद्ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यादेतावता हैनसा भवति तच्छंयोरा- वृणीमहे इत्याह यज्ञमेव तत् स्वगा करोति तत् ( २ ) शंयोरावृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति गातुं यज्ञाय गातुं यज्ञपतय इत्याहाशिषमेवैतामाशास्ते- सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि विकरोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै जामि वा एतद्यज्ञस्य क्रि- यते ( ३ ) यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृ- चा यजत्यजामित्वायाथो मिथुनत्वाय पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयजुः पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्य- न्ति—३३ ) [ प्रजायास्तत् क्रियते त्रयस्त्रिंशच्च ] ॥ १० ॥ युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यः सदः । उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि । त्वꣳ ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः । अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयी- णाम् । तं नेमिमृभवो यथाऽऽनमस्व सहूतिभिः नेदीयो यज्ञम् ( १ ) अङ्गिरः । तस्मै नून-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् । कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः । पणिङ्गोषु स्तरामहे । मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशन्न हासुरघ्नियाः । मा नः समस्य दूढ्यः परिद्वेषसो अꣳहतिः । ऊर्मिर्न नावमावधीत् । नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैः ( २ ) अमित्रमर्दय । कुवित् सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि । मा नो अस्मिन्महाधने परावग्भारभृद्यथा । संवर्गꣳ सꣳ रयिं जय । अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना । वर्धा नो अमवच्छवः । यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं घेदग्निर्वृधाऽवति । परस्या अधि ( ३ ) संवतोऽवराꣳ अभ्यातर । यत्राहमस्मि ताꣳ अव । विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः । अधा ते सुम्नमीमहे । य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳसगः । अग्ने पुरो रुरोजिथ । सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते । सꣳसमिद्युवसे वृषन् ( ४ ) अग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्याभर । प्रजापते स वेद सोमापूषणेमौ देवौ—१९ ) यज्ञमग्नैरधिवृषन्नेकान्नविꣳशतिश्च ॥ ११ ॥

उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे । त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः । त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वन्वन्नवातः परिधीँरपोर्णु वीरेभिरश्वैर्मघवा भव (१) नः । त्वꣳ सोम पितृभिः संवि-
दानोऽनु द्यावापृथिवी आततन्थ । तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयी-
णाम् । अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः । अत्ता हवीꣳषि प्र-
यतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन । बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा
जुषध्वम् । त आगतावसा शन्तमेनाथास्मभ्यम् (२) शंयोररपो दधात । आहं पितॄन् सु-
विदत्राꣳ अवित्सि नपातञ्च विक्रमणञ्च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भज-
न्त पित्वस्त इहागमिष्ठाः । उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आग-
मन्तु त इह श्रुवन्त्वधिब्रुवन्तु तेऽवन्त्वस्मान् । उदीरतामवर उत्परास उन्मध्यमाः पितरः
सोम्यासः । असुम् (३) य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु । इदं पितृभ्यो
नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे रजस्यानिषत्ता ये वा नूनꣳ
सुवृजनासु विक्षु । अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः । शुची-
दयन्दीधितिमुक्थशासः क्षामाभिन्दन्तो अरुणीरपव्रन् । यदग्ने (४) कव्यवाहन पितॄन्
यक्ष्यृतावृधः । प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ । त्वमग्न ईडितो जात-
वेदोऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता
हवीꣳषि । मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः । याꣳश्च देवा वावृधुर्ये च

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



देवान् स्वाहान्ये स्वधयान्ये मदन्ति ( ५ )। इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व । अङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्यानिषद्य । अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे ( ६ ) स्याम—१ ) [ भवास्मभ्यमसुमग्ने मदन्ति सौमनस एकं च ] ॥ १२ ॥ समिध ( ३३५ ) श्चक्षुषी ( ३०२ ) प्रजापति ( २८२ ) देवस्य ( १८३ ) ब्रह्मवादिनो ( ३१७ ) ऽग्ने ( २८७ ) मनुः ( २८४ ) पशवो ( ३४४ ) ऽग्नीधे ( ३९६ ) देवा ( १८३ ) युक्ष्वौ ( २११ ) शंतो ( ३०१ ) द्वादश ( ३४३३ ) ॥ १२ ॥ इति तैत्तिरीय संहितायां द्वितीयकाण्डे षष्ठः प्रपाठकः ॥ वायव्यं ( ३२७८ ) प्रजापति ( ३५१८ ) रादित्येभ्यो ( २९६५ ) देवा ( २४०६ ) विश्वरूपः ( ३६६५ ) समिधः ( ३४३३ ) षट् ( १९२६५ ) द्वितीयकाण्डः समाप्तः ॥

ॐम् प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत सोऽकामयत प्रजाः सृजेयेति स द्वितीयमतप्यत स वयाꣳस्यसृजत सोऽकामयत प्रजाः सृजेयेति स तृतीयमतप्यत स एतं दीक्षितवादमपश्यत्तमवदत्ततो वै स प्रजा असृजत यत्तपस्तप्त्वा दीक्षितवादं वदति प्रजा एव तद्यजमानः ( १ ) सृजते यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्रामति नीलमस्य हरो व्येत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा-
हासीरित्याह नास्माद्दीक्षाऽपक्रामति नास्य नीलं न हरो व्येति यद्वै दीक्षितमभिवर्षति दिव्या
आपोऽशान्ता ओजो बलं दीक्षाम् ( २ ) तपोऽस्य निर्घ्नन्त्युन्दतीर्बलं धत्तौजो धत्त बलं
धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याहैतदेव सर्वमात्मन्धत्ते नास्यौजो बलं न दीक्षां न
तपो निर्घ्नन्त्यग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि
हन्तोः ( ३ ) भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्त्वित्याह ब्रह्म वै देवानां
बृहस्पतिस्तमेवान्वारभते स एनꣳ सम्पारयत्येदमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ
ह्येष पृथिव्या आ गच्छति यो यजते विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा
जोषयन्ते यद्ब्राह्मणाः ( ४ ) ऋक्सामाभ्यां यजुषा सन्तरन्त इत्याहर्क्सामाभ्याꣳ ह्येष
यजुषा सन्तरति यो यजते रायस्पोषेण समिषा मदेमेत्याहाशिषमेवैतामाशास्ते—२४ )
[ यजमानो दीक्षाꣳ हन्तोर्ब्राह्मणाश्चतुर्विꣳशतिश्च ] ॥ १ ॥ एष ते
गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमा-
य ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूताद्यो वै सोमꣳ राजानꣳ साम्राज्यं-
लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं छन्दाꣳसि खलु वै सोमस्य राज्ञः
साम्राज्यो लोकः पुरस्तात् सोमस्य क्रयादेवमभिमन्त्रयेत साम्राज्यमेव ( १ ) एनं लोकं ग-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मयित्वा क्रीणाति गच्छति स्वानाᳪ साम्राज्यं यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रतितिष्ठतीति प्रजापतौ मनसीति ब्रूयात् त्रिरवजिघ्रेत् प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यः (२) वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयेदेषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यदभिक्रम्य जुहुयात् प्रतिष्ठाया इयात्तस्मात् समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै यो वा अध्वर्योः स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य (३) स्वं चमसोऽस्य स्वं यद्वायव्यं वा चमसं वानन्वारभ्याश्रावयेत् स्वादियात्तस्मादन्वारभ्याश्राव्यᳪ स्वादेव नैति यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा (४) गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् प्रत्येव सोमᳪ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमानस्तिष्ठति प्रत्यध्वर्युः—१९) [एवं योऽस्य वैकान्नविᳪशतिश्च] ॥ २ ॥ यज्ञं वा एतत् सम्भरन्ति यत् सोमक्रयण्यै पदं यज्ञमुखᳪ हविर्धाने यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्याद्यज्ञमुख एव यज्ञमनुसन्तनोति प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्वनाꣳसि प्रवर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनुध्यायति सईश्वरो रुद्रो भूत्वा ( १ ) प्रजां पशून् यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेत्तेनैवैनं भागिनं करोति यजमानो वा आहवनीयो यजमानं वा एतद्विकर्षन्ते यदाहवनीयात् पशुश्रपणꣳ हरन्ति स वैव स्यान्निर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वाय यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येत् सैव ततः ( २ ) प्रायश्चित्तिर्ये पशुं विमथ्नीरन् यस्तान् कामयेतार्तिमार्च्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नीध्रे जुहुयान्नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्तिमार्च्छन्ति—२६ ) [ भूत्वा ततः षड्विꣳशतिश्च ] ॥ ३ ॥

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः । तस्मै प्रतिप्रवेदय चिकित्वाꣳ अनुमन्यताम् । इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये । अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् । प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् । सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः । येषामीशे ( १ ) पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् । निष्क्रीतो यं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु । ये बध्यमानमनुबध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च । अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः । य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः । वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः । प्रमुञ्चमानाः ( २ ) भुवनस्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रेतो गातुं धत्त यजमानाय देवाः। उपाकृतꣳ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः। नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः। जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः। यत् पशुर्मायुमकृतोरो वा पद्भिराहते। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः। शमितार उपेत न यज्ञम् (३) देवेभिरिन्वितम्। पाशात् पशुं प्रमुञ्चत बन्धाद्यज्ञपतिं परि। अदितिः पाशं प्रमुमोक्त्वेतं नमः पशुभ्यः पशुपतये करोमि। अरातीयं तमधरं कृणोमि यं द्विष्मस्तस्मिन् प्रतिमुञ्चामि पाशम्। त्वामु ते दधिरे हव्यवाहꣳ शृतं कर्तारमुत यज्ञियञ्च। अग्ने स दक्षः स तनुर्हि भूत्वाथ हव्या जातवेदो जुषस्व। जातवेदो वपया गच्छ देवान् त्वम् (४) हि होता प्रथमो बभूथ। घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः। स्वाहा देवेभ्यो देवेभ्यः स्वाहा—१६) [ ईशे प्रमुञ्चमाना यज्ञं त्वꣳ षोडश च ] ॥ ४ ॥ प्राजापत्या वै पशवस्तेषाꣳ रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्याऽऽलभत आत्मनो नाव्रस्काय द्वाभ्यामुपाकरोति द्विपाद्यजमानः प्रतिष्ठित्या उपाकृत्य पञ्च जुहोति पाङ्क्ताः पशवः पशूनेवावरुन्धे मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यान्नाना प्राणो यजमानस्य पशुनेत्याह व्यावृत्त्यै (१) यत् पशुर्मायुमकृतेति जुहोति शान्त्यै शमितार उपेतनेत्याह यथायजुरेवैतद्वपायां वा आह्रियमाणाया-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मुग्नेर्मेधोपंकामति त्वामुते दंधिरे हव्यवाहमिति वपामभिजुंहोत्युग्नेरेव मेधमवंरुन्धेऽथों शृत-त्वायं पुरस्तांत् स्वाहाकृतयो वा अन्ये देवा उपरिंष्टात् स्वाहाकृतयोऽन्ये स्वाहां देवेभ्यों देवेभ्यः स्वाहेत्यभितों वपाम् ( २ ) जुहोति तानेवोभयांन् प्रीणाति—५ ) [ व्यावृत्त्यै वपां पञ्च च ] ॥ ५ ॥

यो वा अयंथादेवतं यज्ञमुंपचरत्या देवतांभ्यो वृश्च्यते पापीयान् भवति यो यंथादेवतं न देवतांभ्य आवृंश्च्यते वसीयान् भवत्याग्नेय्यर्चाग्नींध्रमभिमृंशेद् वैष्णव्या हविर्धानमाग्नेय्या स्रुचों वायव्यंया वायव्यान्यैन्द्रिया सदों यथादेवतमेव यज्ञमुपंचरति न देवतांभ्य आवृंश्च्यते वसी-यान् भवति युनज्मि ते पृथिवीं ज्योतिंषा सह युनज्मि वायुमन्तरिंक्षेण ( १ ) ते सह युनज्मि वाचꣳ सह सूर्येंण ते युनज्मि तिस्रो विपृचः सूर्यस्य ते । अग्निर्देवता गायत्री छन्द उपाꣳशोः पात्रंमसि सोमों देवता त्रिष्टुप् छन्दोऽन्तर्यामस्य पात्रंमसीन्द्रों देवता जगती छन्द इन्द्रवायुवोः पात्रंमसि बृहस्पतिर्देवतानुष्टुप् छन्दों मित्रावरुंणयोः पात्रंमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रंमसि सूर्यो देवता बृहती ( २ ) छन्दः शुक्रस्य पात्रंमसि चन्द्रमा देवता सतोबृंहती छन्दों मन्थिनः पात्रंमसि विश्वेदेवा देवतोष्णिहा छन्द आग्रय-णस्य पात्रंमसीन्द्रों देवता ककुच्छन्द उक्थानां पात्रंमसि पृथिवी देवता विराड् छन्दों ध्रुवस्य पात्रंमसि—३३ ) [ अन्तरिक्षेण बृहती त्रयंस्त्रिꣳशच्च ] ॥ ६ ॥ इष्टर्गो वा अंध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोर्षुः क्षीयत आसन्यान्मा मन्त्रात् पाहि कस्याश्चिद-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भिशंस्त्या इति पुरा प्रातरनुवाकाज्जुहुयादात्मन एव तदध्वर्युः पुरस्ताच्छर्मं नह्यतेऽनार्त्यै संवेशाय त्वोपवेशाय त्वा गायत्रिया स्त्रिष्टुभो जगत्या अभिभूत्यै स्वाहा प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं देवतासु वा एते प्राणापानयोः ( १ ) व्यायच्छन्ते येषाꣳ सोमः समृच्छते संवेशाय त्वोपवेशाय त्वेत्याह छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दाꣳसि वृङ्क्ते प्रेतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतीः प्रतिपदो विजित्या उभे बृहद्रथन्तरे भवत इयं वाव रथन्तरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथन्तरꣳ श्वो बृहदद्याश्वादेवैनमन्तरेति भूतम् ( २ ) वाव रथन्तरं भविष्यद्बृहत् भूताच्चैवैनं भविष्यतश्चान्तरेति परिमितं वाव रथन्तरमपरिमितं बृहत्परिमिताच्चैवैनमपरिमिताच्चान्तरेति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताꣳ स एतज्जमदग्निर्विहव्यमपश्यत्तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्यꣳ शस्यते इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते ( ३ ) यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति यद्यग्निष्टोमः सोमः परस्तात् स्यादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान् भवति— २८ ) [ प्राणापानयोर्भूतं वृङ्क्तेऽष्टाविꣳशतिश्च ] ॥ ७ ॥ निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयतापानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयतात्मानं मे तर्पयताङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून् मे तर्पयत गृ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हान् मे तर्पयत गणान् मे तर्पयत सर्वगणं मा तर्पयत तर्पयंत मा (१) गणा मे मा वितृषन्नोषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोमोऽवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम । इन्द्रेण देवीवीरुधः संविदाना अनुमन्यन्ताꣳ सवनाय सोममित्याहौषधीभ्य एवैनꣳ स्वायै विशः स्वायै देवतायै निर्याच्याभिषुणोति यो वै सोमस्याभिषूयमाणस्य (२) प्रथमोऽꣳशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून् यजमानस्य निर्हन्तोस्तमभिमन्त्रयेता माऽस्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवतामाशास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घाताय द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च (३) पूर्वः । तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः—१०) [माभिषूयमाणस्यच दश च] ॥ ८ ॥

यो वै देवान् देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान् प्राचीनमाग्रयणात् ग्रहान् गृह्णीयात् तानुपाꣳशु गृह्णीयाद्यानूर्ध्वाꣳस्तानुपब्दिमतो देवानेव तद्देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्वग्निः प्रातःसवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः । स नः पावको द्रविणं दधातु (१) आयुष्मन्तः सहभक्षाः स्याम । विश्वेदेवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्याम

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वनाः सुवरानशानाः स्विष्टिन्नो अभिवसीयो नयन्तु । आयतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः ( २ ) सौम्यास्ता अनायतना ऐन्द्रवायवमादायाघारमाघारयेदध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोमेति सौम्या एव तदाहुतीरायतनवतीः करोत्यायतनवान् भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनत्ति ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति ( ३ ) य एवं वेदैष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् । मनुः पुत्रेभ्यो दायं व्यभजत्स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत्स आगच्छत्सोऽब्रवीत् कथा मा निरभागिति न त्वा निरभाक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते ते ( ४ ) सुवर्गं लोकं न प्रजानन्ति तेभ्य इदं ब्राह्मणं ब्रूहि ते सुवर्गं लोकं यन्तो य एषां पशवस्ताꣳस्ते दास्यन्तीति तदेभ्योऽब्रवीत्ते सुवर्गं लोकं यन्तो य एषां पशव आसन्तानस्मा अददुस्तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै ( ५ ) मह्यमिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तु नाभ्यवेत्यꣳ सोऽब्रवीद्यज्ञे माऽऽभजाथ ते पशून्नाभिमꣳस्य इति तस्मा एतं मन्थिनः सꣳस्रावमजुहोत्ततो वै तस्य रुद्रः पशून्नाभ्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मन्थत यत्रैतम् ( ६ ) एवं विद्वान् मन्थिनः सꣳस्रावं जुहोति न तत्र रुद्रः पशूनभिमन्यते—६ ) [ दधातुथा भवति तेवाएतमेकादश च ]—११ ) ॥ ९ ॥ जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् । यद्वाचो मधुमत्तस्मिन् माधाः स्वाहा सरस्वत्यै । ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि । यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिषणयोरुपस्थात् । अध्वर्योर्वा परि यस्ते पवित्रात् स्वाहाकृतमिन्द्राय तं जुहोमि । यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात् ( १ ) पुरोडाशात् करम्भात् । धानासोमान्मन्थिन इन्द्र शुक्रात् स्वाहाकृतमिन्द्राय तं जुहोमि । यस्ते द्रप्सो मधुमाꣳ इन्द्रियावान् स्वाहाकृतः पुनरप्येति देवान् । दिवः पृथिव्याः पर्यन्तरिक्षात् स्वाहाकृतमिन्द्राय तं जुहोमि । अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान् पशुषु प्रजां मयि ( २ ) च यजमाने चेत्याह वाचमेव तद्यज्ञमुखे युनक्ति वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति पराञ्चो हि यन्ति पराचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योपतिष्ठते यज्ञो वै विष्णुर्यज्ञमेवाकर्विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते ( ३ ) अक्षितमित्याह यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाप्याययति—१४ ) [ परिवापान्मयि दुह्रते चतुर्दश च ] ॥ १० ॥ अग्निना रयिमश्नवत्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पोषमेव दिवेदिवे। यशसं वीरवत्तमम्। गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सद-
मिदप्रमृष्यः। इडावाꣳ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावान्। आप्यायस्व-
सन्ते। इह त्वष्टारमग्रियं विश्वरूपमुपह्वये। अस्माकमस्तु केवलः। तन्नस्तुरीपमध पोषयित्नु देव
त्वष्टर्विरराणः स्यस्व। यतो वीरः (१) कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः। शिवस्त्वष्ट-
रिहागहि विभुः पोष उत त्मना। यज्ञे यज्ञे न उदव। पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जा-
यते देवकामः। प्रजां त्वष्टा विष्यतु नाभिमस्मेअथा देवानामप्येतु पाथः। प्र णो देव्या
नो दिवः। पीपिवाꣳसꣳ सरस्वतः स्तनं यो विश्वदर्शतः। धुक्षीमहि प्रजामिषम् (२) ये
ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः। तेषां ते सुम्नमीमहे। यस्य व्रतं पशवो यन्ति सर्वे यस्य
व्रतमुपतिष्ठन्त आपः। यस्य व्रते पुष्टिपतिर्निविष्टस्तꣳ सरस्वन्तमवसे हुवेम। दिव्यꣳ सुपर्णं
वयसं बृहन्तमपां गर्भं वृषभमोषधीनाम्। अभीपतो वृष्ट्या तर्पयन्तं तꣳ सरस्वन्तमवसे
हुवेम। सिनीवालि पृथुष्टुके या देवानामसि स्वसा। जुषस्व हव्यम् (३) आहुतं प्रजां देवि
दिदिड्ढि नः। या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी। तस्यै विश्पत्न्यै हविः सिनी-
वाल्यै जुहोतन। इन्द्रं वो विश्वतस्परीन्द्रं नरः। असितवर्णा हरयः सुपर्णा मिहो वसाना
दिवमुत्पतन्ति। त आववृत्रन्त्सदनानि कृत्वाऽऽदित् पृथिवी घृतैर्व्युद्यते। हिरण्यकेशो र-
जसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान्। शुचिभ्राजा उषसः (४) नवेदा यशस्वतीरपस्युवो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न मर्त्याः । आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम् । शिवाभिर्न स्मयमानाभिरागात् पतन्ति मिहः स्तनयन्त्यभ्रा । वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि । पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः । यत् क्रीडथ मरुतः (५) ऋष्टिमन्त आप इव सध्रियञ्चो धवध्वे । अभिक्रन्द स्तनय गर्भमाधा उदन्वता परिदीया रथेन । दृतिꣳ सुकर्षं विषितं न्यञ्चꣳ समा भवन्तूद्वता निपादाः । त्वन्त्या चिदच्युताऽग्ने पशुर्न यवसे । धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः । अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम । याश्च (६) माया मायिनां विश्वमिन्व त्वे पूर्वीः सन्दधुः पृष्टबन्धो । दिवो नो वृष्टिं मरुतो ररीध्वं प्रपिन्वत वृष्णो अश्वस्य धाराः । अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः । पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः । अत्यन्न मिहे वि नयन्ति वाजिनमुत्सन्दुहन्ति स्तनयन्तमक्षितम् । उदप्रुतो मरुतस्ताꣳ इयर्त वृष्टिम् (७) ये विश्वे मरुतो जुनन्ति । क्रोशाति गर्दा कन्येव तुन्ना पेरुं तुञ्जाना पत्येव जाया । घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणुताप ओषधीः । ऊर्जं च तत्र सुमतिं च पिन्वथ यत्रा नरो मरुतः सिञ्चथा मधु । उदु त्यं चित्रम् । और्वभृगुवच्छुचिमप्नवानवदा हुवे । अग्निꣳ समुद्रवाससम् । आसवꣳ सवितुर्यथा भगस्य (८) हुव भुजिꣳ हुवे । अग्निꣳ समुद्रवाससम् । हुवे वातस्वनं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कविं पर्जन्यंकन्द्यऽ सहः । अग्निं संमुद्रवाससम्—१२ ) [ वीर इषं हव्यमुपसौ मरुतश्च वृष्टिं भर्गस्य द्वादश च ] ॥ ११ ॥ प्रजापति ( २२४ ) रेष ( २१९ ) यज्ञं ( १२६ ) प्रजापतेः ( २१६ ) प्राजापत्या ( १०५ ) य ( १३३ ) इष्टर्गो ( १७८ ) निग्राभ्यां ( १६० ) यो ( ३५१ ) जुष्टो ( १६४ ) ऽग्निनै ( ४१२ ) कादश ( २२४८ )
इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठकः संपूर्णः ॥ ११ ॥

ओम् यो वै पवमानानामन्वारोहान् विद्वान् यजतेऽनुपवमानानारोहति न पवमानेभ्योऽवच्छिद्यते श्येनोऽसि गायत्रछन्दा अनु त्वारंभे स्वस्ति मा सम्पारय सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वारंभे स्वस्ति मा सम्पारय सघासि जगतीछन्दा अनु त्वारंभे स्वस्ति मा सम्पारयेत्याहैते ( १ ) वै पवमानानामन्वारोहास्तान् य एवंविद्वान् यजतेऽनु पवमानानारोहति न पवमानेभ्योऽवच्छिद्यते यो वै पवमानस्य सन्ततिं वेद सर्वमायुरेति न पुरायुषः प्रमीयते पशुमान् भवति विन्दते प्रजां पवमानस्य ग्रहा गृह्यन्तेऽथवा अस्यैते गृहीता द्रोणकलश आधवनीयः पूतभृत्तान् यदगृहीत्वोपाकुर्यात् पवमानं वि ( २ ) छिन्द्यात्तं विच्छिद्यमानमध्वर्योः प्राणोऽनु विच्छिद्येतोपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशेदिन्द्राय त्वेत्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं पवमानमेव तत् सन्तनोति सर्वमायुरेति न पुरायुषः प्रमीयते पशुमान् भवति विन्दते प्रजाम्—४२ ) [ एते वि द्विचत्वारिंशच्च ] ॥ १ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्रीणि वाव सवनान्यथ तृतीयꣳ सवनमवलुम्पन्त्यनꣳशु कुर्वन्त उपाꣳशुꣳ हुत्वोपाꣳशु पात्रेऽꣳशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयाद्यदाप्याययति तेनाꣳशुमद्यदभिषुणोति तेनर्जीषि सर्वाण्येव तत्सवनान्यꣳशुमन्ति शुक्रवन्ति समावद्वीर्याणिकरोति द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः । तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः ( १ ) सेतुनातियन्त्यन्यम् । द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान् । तिरोधायैत्यसितं वसानः शुक्रमादत्तेअनुहाय जार्यै । देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं महायज्ञमपश्यन्तमतन्वताग्निहोत्रं व्रतमकुर्वत तस्माद्द्विव्रतः स्यात् द्विर्ह्यग्निहोत्रं जुहति पौर्णमासं यज्ञमग्नीषोमीयम् ( २ ) पशुमकुर्वत दार्श्यं यज्ञमाग्नेयं पशुमकुर्वत वैश्वदेवं प्रातः सवनमकुर्वत वरुणप्रघासान्माध्यन्दिनꣳ सवनꣳ साकमेधान् पितृयज्ञं त्र्यम्बकाꣳस्तृतीयसवनमकुर्वत तमेषामसुरा यज्ञमन्ववाजिगाꣳसन् तन्नान्ववायन् तेऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति तदध्वरस्याध्वरत्वं ततो देवा अभवन् परासुरा य एवं विद्वान्त्सोमेन यजते भवत्यात्मना परा (३) अस्य भ्रातृव्यो भवति—३) [ अपश्यन्तोऽग्नीषोमीयं परा त्रीणि च] ॥२॥

परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान् देवान् परिभूर्माꣳसह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं जनाय शमर्वते शꣳ राजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे प्राणाय मे वर्चोदा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वर्चसे पवस्वापानाय व्यानाय वाचे (१) दक्षक्रतुभ्यां चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथाꣳ श्रोत्रायात्मनेऽङ्गेभ्य आयुषे वीर्याय विष्णोरिन्द्रस्य विश्वेषां देवानां जठरमसि वर्चोदा मे वर्चसे पवस्व कोऽसि को नाम कस्मै त्वा काय त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामीमदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदाः (२) वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे। बुभूषन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो भूत्याभिपवते ब्रह्मवर्चसकामोऽवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो ब्रह्मवर्चसेनाभिपवत आमयावी (३) अवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्त आयुषाभिपवतेऽभिचरन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक् प्रधन्वति—४९) [वाचे वर्चोदा आमयावी पञ्चचत्वारिꣳशच्च] ॥ ३ ॥ स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः। यज्ञिया यज्ञकृतः स्थ ते मास्मिन् यज्ञ उपह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुपदेवा उपयज्ञ उप मा होत्रा उपहवे ह्वयन्तां नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुपतिष्ठते यज्ञो वै मखः (१) यज्ञं वाव स त-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दहन्तस्मा एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं तस्मा एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै। नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमाशिषमेवैतामाशास्त इन्द्रियस्य वीर्यस्यानिर्घाताय या वै (२) देवताः सदस्यार्तिमार्पयन्ति यस्ता विद्वान् प्रसर्पति न सदस्यार्तिमार्छति नमोऽग्नये मखघ्न इत्याहैता वै देवताः सदस्यार्तिमार्पयन्ति ता य एवं विद्वान् प्रसर्पति न सदस्यार्तिमार्छति दृढे स्थः शिथिरे समीची माꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहसस्पातु वायुरन्तरिक्षात् (३) अग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यो देवी द्वारौ मा मा सन्तासं नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर उन्निवत उदुद्वतश्च गेषं पातं मा द्यावापृथिवी अद्याह्नः सदो वै प्रसर्पन्तम् (४) पितरोऽनुप्रसर्पन्ति त एनमीश्वरा हिꣳसितोः सदः प्रसृप्य दक्षिणार्धं परेक्षेतागन्त पितरः पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेति तेभ्य एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै—२२) [ मखो वा अन्तरिक्षात् प्रसर्पन्तं त्रयस्त्रिꣳशच्च ] ॥ ४ ॥

भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्याꣳ सघ्यासं नृचक्षसं त्वा देव सोमसुचक्षा अवख्येषं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे ( १ ) शम्भूर्मयोभूः स्वस्ति मा हरिवर्ण प्रचर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा माराजन्वि बीभिषो मामे हार्दि त्विषा वधीः । वृषणे शुष्मायाऽऽयुषे वर्चसे । वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य ( २ ) पितृपीतस्य मधुमत उपहूतस्यो पहूतो भक्षयाम्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । आप्यायस्व समेतु विश्वतः सोम वृष्णियम् । भवा वाजस्य सङ्गथे । हिन्व मे गात्रा हरिवो गणान् मे मा वितीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति ( ३ ) गाः । अपाम सोमममृता अभूमादर्श्म ज्योतिरविदाम देवान् । किमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य । यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराहाजातवेदा विचर्षणिः । पुनरग्निश्चक्षुरदात् पुनरिन्द्रो बृहस्पतिः । पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः । इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य ( ४ ) शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूत स्योपहूतो भक्षयामि । आपूर्या स्था मा पूरयत प्रजया च धनेन च । एतत्ते तत ये च त्वाम-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथाभागं मन्दध्वं नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः ( ५ ) स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माँस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासं प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ( ६ ) यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् । देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्यप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो- अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि—४४ ) [विश्वचर्षणे नराशꣳसंपीतस्यातिस्तुतस्तोमस्य पितरो बभूव चतुश्चत्वारिꣳशच्च ] ॥ ५ ॥

महीनां पयोऽसि विश्वेषां देवानां तनूर्ऋध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहोऽसि विष्णो- र्हृदयमस्येकमिष विष्णुस्त्वानुविचक्रमे भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रवि- णमागम्याज्ज्योतिरसि वैश्वानरं पृश्निये दुग्धं यावती द्यावापृथिवी महित्वा यावच्च सप्तसि- न्धवो वितस्थुः । तावन्तमिन्द्र ते ( १ ) ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतम् । यत् कृष्णशकुनः पृष- दाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वाऽवमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्यु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

यत् स्कन्देद्यजमानः प्रमायुकः स्यात् पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳ स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णाति प्राणो वै पृषदाज्यं प्राणो वै ( २ ) एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यश्वमवघ्रापयति प्राजापत्यो वा अश्वः प्राजापत्यः प्राणः स्वादेवास्मै योनेः प्राणम् ( ३ ) निर्मिमीते वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सन्तनोति—२२ ) [ ते वै प्राणं द्वाविꣳशतिश्च ] ॥ ६ ॥

देव सवितरेतत्ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतञ्च सत्यञ्च वदत स्तुत देवस्य सवितुः प्रसवे स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रम् ( १ ) अस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादिन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याऽऽशीर्देवेषु भूयाद्ब्रह्मवर्चसं माऽऽगम्यात् । यज्ञो बभूव स आबभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणाम् । यज्ञो वा वै ( २ ) यज्ञपतिं दुहे यज्ञपतिर्वा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यज्ञं दुहे स यः स्तुतशस्त्रयोर्दोहमविद्वान्यजते तं यज्ञो दुहे स इष्ट्वा पापीयान् भवति य एनयोर्दोहं विद्वान्यजते स यज्ञं दुहे स इष्ट्वा वसीयान् भवति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मां स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहाम् ( ३ ) आ मां शस्त्रस्य शस्त्रं गम्यादित्याहैषवै स्तुतशस्त्रयोर्दोहस्तं य एवं विद्वान् यजते दुहे एव यज्ञमिष्ट्वा वसीयान् भवति—२२ ) [ शस्त्रं वै दुहां द्वाविꣳशतिश्च ] ॥ ७ ॥

श्येनाय पत्वने स्वाहा वट् स्वयमभिगूर्ताय नमो विष्टम्भाय धर्मणे स्वाहा वट् स्वयमभिगूर्ताय नमः परिधये जनप्रथनाय स्वाहा वट् स्वयमभिगूर्ताय नम ऊर्जे होत्राणाꣳ स्वाहा वट् स्वयमभिगूर्ताय नमः पयसे होत्राणाꣳ स्वाहा वट् स्वयमभिगूर्ताय नमः प्रजापतये मनवे स्वाहा वट् स्वयमभिगूर्तायनम ऋतमृतपाः सुवर्वाट् स्वाहा वट् स्वयमभिगूर्ताय नमः स्तृम्पन्ताꣳ होत्रा मधो घृतस्य यज्ञपतिमृषय एनसा ( १ ) आहुः। प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तो कावपतौ रराध। सन्नस्ताभ्याꣳ सृजतु विश्वकर्मा घोरा ऋषयो नमो अस्त्वेभ्यः। चक्षुष एषां मनसश्च सन्धौ बृहस्पतये महि षद्द्युमन्नमः। नमो विश्वकर्मणे स उपात्वस्माननन्यान्त्सोमपान् मन्यमानः। प्राणस्य विद्वान् समरे न धीर एनश्चकृवान् महि बद्ध एषाम्। तं विश्वकर्मन् ( २ ) प्रमुञ्चा स्वस्तये ये भक्षयन्तो न वसून्यानृहुः। यानग्नयोऽन्वतप्यन्त धिष्णिया इयन्तेषामवयादुरिष्ट्यै स्विष्टिन्नस्तां कृणोतु विश्वकर्मा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नमः पितृभ्यो अभि ये नो अख्यन् यज्ञकृतो यज्ञकामाः सुदेवा अकामा वो दक्षिणान्न नीनिम मा नस्तस्मादेनसः पापयिष्ट । यावन्तो वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणां न ( ३ ) नयेदैभ्यो वृश्च्येत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत् प्रीणात्यस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः । पुमान् पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः । आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायः सचताꣳ समोकसा । य आऽसिचत्संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः । सर्पिर्ग्रीवी ( ४ ) पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य । सहजानिर्यः सुमखस्यमान इन्द्रायाशिरꣳ सह कुम्भ्याऽदात् । आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सवर्चसम् । सञ्जयन् क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्याꣳ अधरान्त्सपत्नान् । भूतमसि भूते मा धा मुखमसि मुखं भूयासं द्यावापृथिवीभ्यां त्वा परि गृह्णामि विश्वे त्वा देवा वैश्वानराः ( ५ ) प्र च्यावयन्तु दिवि देवान् दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवान् ध्रुवं ध्रुवेण हविषाऽव सोमन्नयामसि यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् । यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् । यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन्—४० ) [ एनसा विश्वकर्मन्न सर्पिर्ग्रीवी वैश्वानराश्चत्वारिꣳशच्च ] ॥ ८ ॥ यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभिप्रवर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्रिपदा गायत्री गायत्रं प्रातःसवनं गायत्रियैव प्रातःसवने वज्रमन्तर्धत्त उक्थं वाचीत्याह माध्यंन्दिनꣳ सवनं प्रतिगीर्यं चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप् त्रैष्टुभं माध्यंन्दिनꣳ सवनं त्रिष्टुभैव माध्यंन्दिने सवने वज्रमन्तर्धत्ते ( १ ) उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्यं सप्तैतान्यक्षराणि सप्तपदा शक्करी शाक्करो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्ते ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे छन्दाꣳसि सम्पादयेत्तेजः प्रातःसवन आत्मन् दधीतेन्द्रियं माध्यंन्दिने सवने पशूꣳस्तृतीयसवन इत्युक्थशा इत्याह प्रातः सवनं प्रतिगीर्यं त्रीण्येतान्यक्षराणि ( २ ) त्रिपदा गायत्री गायत्रं प्रातःसवनं प्रातःसवन एव प्रतिगरे छन्दाꣳसि सम्पादयत्यथो तेजो वै गायत्री तेजः प्रातःसवनं तेज एव प्रातःसवन आत्मन्धत्त उक्थं वाचीत्याह माध्यंन्दिनꣳ सवनं प्रतिगीर्यं चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप् त्रैष्टुभं माध्यंन्दिनꣳ सवनं माध्यंन्दिन एव सवने प्रतिगरे छन्दाꣳसि सम्पादयत्यथो इन्द्रियं वै त्रिष्टुगिन्द्रियं माध्यंन्दिनꣳ सवनम् ( ३ ) इन्द्रियमेव माध्यंन्दिने सवन आत्मन्धत्त उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्यं सप्तैतान्यक्षराणि सप्तपदा शक्करी शाक्कराः पशवो जागतं तृतीयसवनं तृतीयसवन एव प्रतिगरे छन्दाꣳसि सम्पादयत्यथो पशवो वै जगती पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन्धत्ते यद्वै होताध्वर्युमभ्याह्वयत आव्यमस्मिन् दधाति तद्यन्न ( ४ ) अपहनीत पुरास्य संवत्सराद्गृह आ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वेवीरञ्छोꣳसा मोदं इवेति प्रत्याह्वयते तेनैव तदपंहते यथा वा आयंतां प्रतीक्षंत एवमंध्व-र्युः प्रतिगरं प्रतीक्षते यदंभिप्रतिगृणीयाद्यथायंतया समृच्छते तादृगेव तद् यदंर्धर्चाल्लुप्येत यथा धावंद्भ्यो हीयते तादृगेव तत् प्रबाहुग्वा ऋत्विजांमुद्गीथा उंद्गीथ एवोद्गातृणाम् ( ५ ) ऋचः प्रंणव उंक्थशꣳसिनां प्रतिगरोऽध्वर्यूणां य एवं विद्वान् प्रंतिगृणात्यंन्नाद एव भंव-त्याऽऽस्यं प्रजायां वाजी जांयत इयं वै होताऽसावंध्वर्युर्यदासीनः शꣳसंत्यस्या एव त-द्धोता नैत्यास्त इव हीयमथो इमामेव तेन यजमानो दुहे यत्तिष्ठंन् प्रतिगृणात्यमुष्यां एव तदंध्वर्युर्नैं तिं ( ६ ) तिष्ठंतीव ह्यंसावथो अमूमेव तेन यजमानो दुहे यदासीनः शꣳसं-ति तस्मादितः प्रदानं देवा उपंजीवन्ति यत्तिष्ठंन् प्रतिगृणाति तस्मादमुतः प्रदानं मनु-ष्यां उपंजीवन्ति यत् प्राङासीनः शꣳसंति प्रत्यङ् तिष्ठंन् प्रतिगृणाति तस्मात् प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते यद्वै होताध्वर्युमंभ्याह्वयते वज्रमेनमभिप्रवर्तयति ( ७ ) पराङावर्तते वज्रमेव तन्निकरोति—८ ) [ धत्ते क्षराणि सवनं नोद्गातृणामेति वर्तयत्यष्टौ च ] ॥ ९ ॥

उपयामगृहीतोऽसि वाक्षसदंसि वाक्पाभ्यां त्वा क्रतुपाभ्यांमस्य यज्ञस्यं ध्रुवस्याध्यंक्षाभ्यां गृ-ह्णाम्युपयामगृहीतोऽस्यृतसदंसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यांमस्य यज्ञस्यं ध्रुवस्याध्यंक्षा भ्यां गृह्णाम्युपयामगृहीतोऽसि श्रुतसदंसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यांमस्य यज्ञ-स्यं ध्रुवस्याध्यंक्षाभ्यां गृह्णामि देवेभ्यस्त्वा विश्वदेवेभ्यस्त्वा विश्वेभ्यस्त्वा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



देवेभ्यो विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व ( १ ) तन्ते दुश्चक्षा माऽवख्य न्मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि यो न इन्द्रवायू मित्रावरुणावश्विनावभिदासति भ्रातृव्यः ( २ ) उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि—१३ ) [ रक्षस्व भ्रातृव्यस्त्रयोदश च ] ॥ १० ॥ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः । यस्य त्वꣳ सख्यमाविथ । प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपां ज्योतीꣳषि बिभ्रते न वेधसे । अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः । तिस्र उ ते तनुवो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् । सं वां कर्मणा समिषा ( १ ) हिनोमीन्द्राविष्णू अपसस्पारे अस्य । जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता । उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् । त्रीण्यायूꣳषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने । ताभिर्देवानामवो यक्षि विद्वानथ ( २ ) भव यजमानाय शं योः । अग्निस्त्रीणि त्रिधातून्याक्षेति विदथा कविः । स त्रीꣳरेकादशाꣳ इह । यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतः । नभन्तामन्यके समे । इन्द्राविष्णू दृꣳहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

शतं वर्चिनः सहस्रं च साकꣳ हथो अप्रत्यसुरस्य वीरान् । उत मातामहिषमन्ववेनदमी त्वां (३) जहति पुत्र देवाः । अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं विक्रमस्व —१३) [इषाऽथ त्वा त्रयोदश च] ॥ ११ ॥ य (११२) स्त्रीणि (१५३) परिभूः (१९५) स्फ्यो (२३३) भक्षं (३४४) महीनां (१७२) देवं (१७२) श्येनाय (२९०) य (३५८) दुपयामगृहीतः (११२ प्रै १६३) कादश (२३३५) ॥ ११ ॥
इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठकः ॥

ओ३म् अग्ने तेजस्विन् तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषं मा मां तेजो हासीदिन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मा मायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य च (१) ओजसे जुहोम्योजोविदस्योजो मा मा हासीन्माहमोजो हासिषं मा मामोजो हासीत् सूर्य भ्राजस्विन् भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मा मायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु वायोश्च त्वाऽपाञ्च भ्राजसे जुहोमि सुवर्विदसि सुवर्मा मा हासीन्माहꣳ सुवर्हासिषं मा माꣳ सुवर्हासीन् मयि (२) मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु—२३) [च मयि त्रयोविꣳश-
CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तिश्च ] ॥ १ ॥ वायुर्हिं कर्ताग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधत्वेतद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति ते देवाः प्राणभृतः प्राणं मयि दधत्वित्याहैतदेव सर्वमात्मन्धत्त इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाः (१) सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु—२८) [ देवा अष्टाविꣳशतिश्च ] ॥ २ ॥ वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसाग्नेः प्रियं पाथ उपेहि रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्यादित्यास्त्वा प्रवृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि मान्दासु तेशुक्रशुक्रमाधूनोमि भन्दनासु कोतनासु नूतनासु रेशीषु मेषीषु वाशीषु विश्वभृत्सु माध्वीषु ककुहासु शक्वरीषु (१) शुक्रासु ते शुक्र शुक्रमाधूनोमि शुक्रन्ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आऽस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत । ककुहꣳ रूपं वृषभस्य रोचते बृहत्सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहोशिक्त्वं देव सोम गायत्रेण छन्दसाऽग्नेः (२) प्रियं पाथो अपीहि वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मत्सखा त्वं अपीहि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीह्या नः प्राण एतु परावत आऽन्तरिक्षाद्दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा । इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । ( २ ) वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना । दधन्वे वा यदीमनुवोचद्ब्रह्माणि वेरु तत् । परि विश्वानि काव्या नेमिश्चक्रमिवाभवत्—२५ ) [ शक्करी च्चग्नेबृहस्पतिःपञ्चविंशतिश्च ] ॥ ३ ॥ एतद्वा अपां नामधेयं गुह्यं यदाधावा मान्दासु ते शुक्र शुक्रमाधूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमवरुन्धे शुक्रन्ते शुक्रेण गृह्णामीत्याहैतद्वा अह्नो रूपं यद्रात्रिः सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिं च्यावयतित्याऽस्मिन्नुग्राः ( १ ) अचुच्यवु रित्याह यथा यजुरेवैतत् ककुहꣳ रूपं वृषभस्य रोचते बृह दित्याहैतद्वाअस्यककुहꣳरूपं यद्वृष्टी रूपेणैव वृष्टिमवरुन्धे यत्ते सोमादाभ्यं नाम जागृवीत्याहैष हवै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति परा वा एतस्यायुः प्राण एति ( २ ) योꣳशुं गृह्णात्या नः प्राण एतु परावत इत्याहायुरेव प्राणमात्मन्धत्ते ऽमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनित्यमृतं वै हिरण्यमायुः प्राणोऽमृतेनैवायु रात्मन्धत्ते शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यप उपस्पृशति भेषजंवा आपः ( ३ ) भेषजमेव कुरुते—३ ) [ उग्रा एत्याप स्त्रीणि च ] ॥ ४ ॥ वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाश्चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



युर्मे दा रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दा ऋतमसि सत्यं नामेन्द्रस्याधिपत्ये क्षत्रं मे दा भूतमसि भव्यं नाम पितॄणामाधिपत्येऽपामोषधीनां गर्भं धा ऋतस्य त्वा व्योमन ऋतस्य (१) त्वा विभूमन ऋतस्य त्वा विधर्मण ऋतस्य त्वा सत्यायर्तस्य त्वा ज्योतिषे प्रजापतिर्विराजमपश्यत्तया भूतञ्च भव्यञ्चासृजत तामृषिभ्यस्तिरोदधात्तां जमदग्निस्तपसापश्यत्तया वै स पृश्नीन् कामानसृजत तत् पृश्नीनां पृश्नित्वं यत् पृश्नयो गृह्यन्ते पृश्नीनेव तैः कामान् यजमानोऽवरुन्धे वायुरसि प्राणः (२) नामेत्याह प्राणापानावेवावरुन्धे चक्षुरसि श्रोत्रं नामेत्याहायुरेवावरुन्धे रूपमसि वर्णो नामेत्याह प्रजामेवावरुन्ध ऋतमसि सत्यं नामेत्याह क्षत्रमेवावरुन्धे भूतमसि भव्यं नामेत्याह पशवो वा अपामोषधीनां गर्भः पशूनेव (३) अवरुन्ध एतावद्वै पुरुषं परितस्तदेवावरुन्ध ऋतस्य त्वा व्योमन् इत्याहेयं वा ऋतस्य व्योमेमामेवाभिजयत्यृतस्य त्वा विभूमन् इत्याहान्तरिक्षं वा ऋतस्य विभूमान्तरिक्षमेवाभिजयत्यृतस्य त्वा विधर्मण इत्याह द्यौर्वा ऋतस्य विधर्म दिवमेवाभिजयत्यृतस्य (४) त्वा सत्यायेत्याह दिशो वा ऋतस्य सत्यं दिश एवाभिजयत्यृतस्य त्वा ज्योतिष इत्याह सुवर्गो वै लोक ऋतस्य ज्योतिः सुवर्गमेव लोकमभिजयत्येतावन्तो वै देव लोकास्तानेवाभिजयति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति—४६) [ ऋतस्य प्राण एव तस्य षट्चत्वारिंशच्च ] ॥ ५ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.


देवा वै यद्यज्ञेन नावारुन्धत तत्परैरवारुन्धत तत्पराणां परत्वं यत्परं गृह्यन्ते यदेव यज्ञेन नाव रुन्धे तस्यावरुध्यै यं प्रथमं गृह्णातीममेव तेन लोकमभिजयति यं द्वितीयमन्तरिक्षं तेन यं तृतीयममुमेव तेन लोकमभिजयति यदेते गृह्यन्त एषां लोकानामभिजित्यै ( १ ) उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमाँल्लोकान् पुनरिमं लोकं प्रत्यवरोहन्ति यत्पूर्वेष्वहः स्वितः पराञ्चो गृह्यन्ते तस्मादितः पराञ्च इमे लोका यदुत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्ते तस्मादमुतोऽर्वाञ्च इमे लोकास्तस्मादयातयाम्नो लोकान्मनुष्या उपजीवन्ति ब्रह्मवादिनो वदन्ति कस्मात्सत्या दद्भ्य ओषधयः सम्भवन्त्योषधयः ( २ ) मनुष्याणामन्नं प्रजापतिं प्रजा अनु प्रजायन्त इति परान्विति ब्रूयात् यद् गृह्णात्यद्भ्यस्त्वौषधीभ्यो गृह्णामीति तस्मादद्भ्य ओषधयः सम्भवन्ति यद् गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नं यद्गृह्णाति प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तस्मात्प्रजापतिं प्रजा अनु प्रजायन्ते—४८ ) [ अभिजित्या ओषधयोष्टाचत्वारिंशच्च ]॥ ६ ॥ प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यत यज्ञं छन्दाꣳसि ते विष्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाक्रामद्यज्ञं छन्दाꣳसि ते देवा अमन्यन्तामी वा इदमभूवन्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्सोऽब्रवीत्प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्रदास्यामीति स छन्दसां वीर्यम् ( १ ) आदाय तदेभ्यः प्रायच्छत्तदनु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



छन्दाꣳस्यपाक्रामन् छन्दाꣳसि यज्ञस्ततो देवा अभवन् पराऽसुरा य एवं छन्दसां वीर्यं
वेदाश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो भवत्यात्मना परास्य भ्रातृव्यो भवति
ब्रह्मवादिनो वदन्ति कस्मै कमध्वर्युराश्रावयतीति छन्दसां वीर्यायेति ब्रूयादेतद्वै (२)
छन्दसां वीर्यमाश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद स वीर्यैरेव
छन्दोभिरर्चति यत्किञ्चार्चति यदिन्द्रो वृत्रमहन्नमेध्यं तद्यद्यतीरपावपदमेध्यन्तदथ कस्मा-
दैन्द्रो यज्ञ आ सꣳस्थातोरित्याहुरिन्द्रस्य वा एषा यज्ञिया तनूर्यद्यज्ञस्तामेव तत् (३)
यजन्ति य एवं वेदोपैनं यज्ञो नमति—८) [वीर्यं वै तदष्टौ च] ॥ ७ ॥

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव
पुत्रमभिरक्षतादिमम् । आवृश्च्यते वा एतद्यजमानोऽग्निभ्यां यदेनयोः शृतं कृत्वाथान्यत्रा-
वभृथमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादाहुत्यैवैनौ शमयति ना-
र्तिमार्च्छति यजमानो यत् कुसीदम् (१) अप्रतीत्तं मयि येन यमस्य बलिना चरामि ।
इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामि । विश्वलोप विश्वदावस्य त्वा सञ्जुहोम्यग्धा-
देकोऽहुतादेकः समसनादेकः । ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यम् । अयन्नो नभसा
पुरः सꣳस्फानो अभिरक्षतु । गृहाणामसमर्त्यै बहवो नो गृहा असन् । स त्वन्नः (२) नभ-
सस्पत ऊर्जं नो धेहि भद्रया । पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि । देव सꣳस्फान सह-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्पोषस्येशिषे स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् । अग्निर्वाव यम इयं यमी कुसीदं वा एतद्यमस्य यजमान आदत्ते यदोषधीभिर्वेदिꣳ स्तृणाति यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनम् ( ३ ) अमुष्मिँल्लोके नेनीयेरन् यत् कुसीदमप्रतीत्तं मयीत्युपोषतीहैव सन्यमङ्कुसीदं निरवदायानृणः सुवर्गं लोकमेति यदि मिश्रमिव चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत् प्रदाव्यः स एवैनꣳ स्वदयत्यह्नां विधान्यामेकाष्टकायामपूपञ्चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेद्यदि ( ४ ) दहति पुण्यसमं भवति यदि न दहति पापसममेतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्त्रमुपयन्ति यो वा उपद्रष्टारमुपश्रोतारमनुख्यातारं विद्वान् यजते सममुष्मिन् लोक इष्टापूर्तेन गच्छतेऽग्निर्वा उपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता तान्यएवं विद्वान्यजते सममुष्मिन् लोक इष्टापूर्तेन गच्छतेऽयन्नो नभसा पुरः ( ५ ) इत्याहाग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति स त्वन्नो नभसस्पत इत्याह वायुर्वै नभसस्पतिर्वायुमेव तदाहैतन्मे गोपायेति देव सꣳस्फानेत्याहासौ वा आदित्यो देवः सꣳस्फान आदित्यमेव तदाहैतन्मे गोपायेति ( ६ ) [ कुसीदन्न एनं यदि पुर इति ॥ ८ ॥ ]

एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण । मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम । नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहं गृणामि । अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् । देवानामेष उपनाह आसीदपाङ्गर्भ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ओषधीषु न्यक्तः। सोमस्य द्रप्समवृणीत पूषा ( १ ) बृहन्नद्रिरभवत्तदेषाम्। पिता वत्सानां
पतिरघ्नियानामथो पिता महतां गर्गराणाम्। वत्सो जरायु प्रतिधुक्पीयूष आमिक्षा मस्तु घृ-
तमस्य रेतः। त्वां गावोऽवृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः। वर्ष्मन् क्षत्रस्य ककुभि
शिश्रियाणस्ततो न उग्रो वि भजा वसूनि। व्यृद्धेन वा एष पशुना यजते यस्यैतानि न
क्रियन्त एषः ( २ ) ह त्वै समृद्धेन यजते यस्यैतानि क्रियन्ते—८ ) [ पूषैषोऽष्टौ च ] ॥ ९ ॥
सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः। बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं
जुहोतु। यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी। अङ्गान्यह्रुता यस्यै तां देवैः समजी-
गमम्। आवर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद। भूम्याश्चतस्रः प्रदिशस्ताभिरावर्तया
पुनः। वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ। वि ( १ ) मातरं च पुत्रं च वि गर्भं च
जरायु च। बहिस्ते अस्तु बालिति। उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम्।
एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनानु प्रथताꣳ स्वाहा।
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः—४४ ) [ वि चतुश्चत्वा-
रिꣳशच्च ] ॥ १० ॥ इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती। उक्थं मदश्च शस्यते। अयं
वाम्परि षिच्यते सोम इन्द्राबृहस्पती। चारुर्मदाय पीतये। अस्मे इन्द्राबृहस्पती रयिं धत्तꣳ
शतग्विनम्। अश्वावन्तꣳ सहस्रिणम्। बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः। इन्द्रः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु । वि ते विष्वग्वातजूतासो अग्ने भामासः ( १ ) शुचे शुचयश्चरन्ति । तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः । त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिꣳरत्नधातमम् । गुहा सन्तꣳ सुभग विश्वदर्शतन्तुविष्मणसꣳ सुयजं घृतश्रियम् । धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् । धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान । धाता पुत्रं यजमानाय दाता ( २ ) तस्मा उ हव्यं घृतवद्विधेम । धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिꣳ सत्यराधसः । धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे । तस्मै देवा अमृताः संव्ययन्तां विश्वे देवासो अदितिः सजोषाः । अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतान्दाशुषे मयः । अन्विदनुमते त्वम् ( ३ ) मन्यासै शं च नः कृधि । क्रत्वे दक्षाय नो हिनु प्रण आयूꣳषि तारिषः । अनुमन्यतामनुमन्यमाना प्रजावन्तꣳ रयिमक्षीयमाणम् । तस्यै वयꣳ हेडसि मापि भूम सा नो देवी सुहवा शर्म यच्छतु । यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रति भूषन्त्यायवः । यस्या उपस्थ उर्वन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु ( ४ ) राकामहꣳ सुहवाꣳ सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरꣳ शतदायमुक्थ्यम् । यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सहस्रपोषꣳ सुभगे ररांणा । सिनीवालि या सुपाणिः । कुहूमहꣳसुभगां विद्मनापसम्स्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणम् ( ५ ) पितृणान्तस्यांस्ते देवि हविषां विधेम । कुहूर्देवानाममृतस्य पत्नी हव्यां नो अस्य हविषश्चिकेतु । सन्दाशुषे किरतु भूरि वामꣳ रायस्पोषश्चिकितुषेदधातु—२४ ) भामासो दाता त्वं यच्छतु श्रवणं चतुर्विꣳशतिश्च ] ॥ ११ ॥ अग्ने ( १२३ ) वायुं ( ७८ ) वसव ( १७५ ) एत ( १५२ ) द्वायु ( २४६ ) र्देवाः ( १४९ ) प्रजापति ( १५८ ) रायुर्दा ( ३०० ) एतꣳ ( १०८ ) सूर्य ( ९४ ) इद ( २७४ ) मेकादश ( १८५७ ) ॥ ११ ॥ इति तैत्तिरीयसंहितायां तृतीयकांडे तृतीयप्रपाठकः संपूर्णः ॥

ओम् वि वा एतस्य यज्ञ ऋध्यते यस्य हविरंतिरिच्यते सूर्यो देवो दिविषद्भ्य इत्याह बृहस्पतिना चैवास्य प्रजापतिना च यज्ञस्य व्यृद्धमपि वपति रक्षांꣳसि वा एतत् पशुꣳ सचन्ते यदैकदेवत्य आलब्धो भूयान् भवति यस्यास्ते हरितो गर्भ इत्याह देवत्रैवैनांङ्गमयति रक्षसामपहत्या आवर्तन वर्तयेत्याह ( १ ) ब्रह्मणैवैनमावर्तयति वि ते भिनद्मि तकरीमित्याह यथायजुरेवैत द्रुद्रप्सो विश्वरूप इन्दुरित्याह प्रजा वै पशव इन्दुः प्रजयैवैनं पशुभिः समर्धयति दिवं वै यज्ञस्य व्यृद्धं गच्छति पृथिवीमतिरिक्तं तद्यन्न शमयेदार्तिमार्च्छेद्यजमानो मही द्यौः पृथिवी च न इति ( २ ) आह द्यावापृथिवीभ्यामेव यज्ञस्य व्यृद्धञ्चातिरिक्तञ्च शम-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यति नार्तिमार्च्छति यजमानो भस्मनाभिसमूहति स्वगाकृत्या अथो अनयोर्वा एष गर्भोऽनयोरेवैनं दधाति यदवद्येदति तद्रेचयेद्यन्नावद्येत्पशोरालब्धस्य नावद्येत्पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यत् पुरस्ताद्वै नाभ्यै ( ३ ) प्राण उपरिष्टादपानो यावानेव पशुस्तस्यावद्यति विष्णवे शिपिविष्टाय जुहोति यद्वै यज्ञस्यातिरिच्यते यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यतिरिक्तस्य शान्त्या अष्टाप्रूढिरण्यं दक्षिणाष्टापदी ह्येषात्मा नवमः पशोराप्त्या अन्तरकोश उष्णीषेणाविष्टितं भवत्येवमिव हि पशुरुल्बमिव ( ४ ) चर्मेव माꣳसमिवास्थीव यावानेव पशुस्तमाप्त्वावरुन्धे यस्यैषा यज्ञे प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान् भवति—२१ ) [ आहेति नाभ्या इवैकविꣳशतिश्च ]॥ १ ॥ आ वायो भूष शुचिपा उप नः सहस्रन्ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् । आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते प्राणं वायवे स्वाहा किक्किटा ते चक्षुः सूर्याय स्वाहा किक्किटा ते श्रोत्रन्द्यावापृथिवीभ्याꣳ स्वाहा किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा ( १ ) त्वन्तुरीया वशिनी वशासि सकृद्यत्त्वा मनसा गर्भ आशयत् । वशा त्वं वशिनी गच्छ देवान् सत्याः सन्तु यजमानस्य कामाः । अजासि रयिष्ठा पृथिव्याꣳ सीदोर्ध्वान्तरिक्षमुपतिष्ठस्व दिवि ते बृहद्भाः । तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्बणं वयत जोगुवामपो मनुः ( २ ) भव जनया दैव्यं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जनस् । मनसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाजो भूयास्म — १३ ) [ स्वाहा मनुः स्वयो-
दश च ] ॥ २ ॥ इमे वै सहास्तां ते वायुर्व्यवात्ते गर्भमदधातां तꣳ सोमः प्राजन-
यदग्निरग्रसत स एतं प्रजापतिराग्नेयमष्टाकपालमपश्यत्तं निरवपत्तेनैवैनामग्नेरधि निरक्रीणा-
त्तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपालं पुरस्तान्निर्वपेदग्नेरेवैनामधि निष्क्रीया-
लभते यत् ( १ ) वायुर्व्यवात्तस्माद्वायव्या यदिमे गर्भमदधातां तस्माद्द्यावापृथिव्या यत्
सोमः प्राजनयदग्निरग्रसत तस्मादग्नीषोमीया यदनयोर्वियत्योर्वागवदत्तस्मात् सारस्वती यत्
प्रजापतिरग्नेरधि निरक्रीणात्तस्मात् प्राजापत्या सा वा एषा सर्वदेवत्या यदजावशा वायव्या-
मालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन ( २ ) भागधेयेनोपधावति स एवैनं
भूतिं गमयति द्यावापृथिव्यामालभेत कृषमाणः प्रतिष्ठाकामो दिव एवास्मै पर्जन्यो वर्षति
व्यस्यामोषधयो रोहन्ति समर्धुकमस्य सस्यं भवत्यग्नीषोमीयामालभेत यः कामयेतान्न-
वानन्नादः स्यामित्यग्निनैवान्नमवरुन्धे सोमेनान्नाद्यमन्नवानेवान्नादो भवति सारस्वतीमालभेत
यः ( ३ ) ईश्वरो वाचो वदितोः सन्वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनो
पधावति सैवास्मिन् वाचं दधाति प्राजापत्यामालभेत यः कामयेतानभिजितमभिजयेयमिति
प्रजापतिः सर्वा देवता देवताभिरेवानभिजितमभिजयति वायव्ययोपाकरोति वायोरेवैनाम-
वरुध्यालभत आकुत्यै त्वा कामाय त्वा ( ४ ) इत्याह यथा यजुरेवैतत् किक्किटाकारं जुहोति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



किक्किटाकारेण वै ग्राम्याः पशवो रमन्ते प्रारण्याः पतन्ति यत् किक्किटाकारं जुहोति ग्राम्याणां पशूनां धृत्यै पर्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनाꣳ सुवर्गं लोकं गमयति त्वन्तुरीया वशिनी वशासीत्याह देवत्रैवैनां गमयति सत्याः सन्तु यजमानस्य कामा इत्याहैष वै कामः ( ५ ) यजमानस्य यदनार्त उदृचं गच्छति तस्मादेवमाहाजासि रयिष्ठेत्याहैष्वेवैनां लोकेषु प्रतिष्ठापयति दिवि ते बृहद्भा इत्याह सुवर्ग एवास्मै लोके ज्योति र्दधाति तन्तुं तन्वन् रजसो भानुमन्विहीत्याहेमानेवास्मै लोकान् ज्योतिष्मतः करोत्यनुल्बणं वयत जोगुवामप इति ( ६ ) आह यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्ति र्मनुर्भव जनया दैव्यं जनमित्याह मानव्यो वै प्रजास्ता एवाद्याः कुरुते मनसो हविरसीत्याह स्वगाकृत्यै गात्राणां ते गात्रभाजो भूयास्मेत्याहाशिषमेवैतामाशास्ते तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रः ( ७ ) भवति यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयेत् सर्वां वा प्राश्नीयाद्यदप्सु प्रवेशयेद्यज्ञवेशसं कुर्यात् सर्वामेव प्राश्नीयादिन्द्रियमेवात्मन् धत्ते सा वा एषा त्रयाणामेवावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमेधिनस्त एवैतया यजेरन्तेषामेवैषाप्ता —४२ ) [ यत् स्वेन य स्त्वा कामं इत्यभ्रो द्विचत्वारिꣳशच्च ] ॥ ३ ॥ चित्तश्च चित्तिश्चाकूतश्चाकूतिश्च विज्ञातश्च विज्ञानश्च मनश्च शक्करीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरश्च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समन-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मन्तु सर्वाः स उग्रः स हि हव्यो बभूव देवासुराः संयत्ता आसन्त्स इन्द्रः प्रजापतिमुप (१) अधावत्तस्मा एताञ्जयान् प्रायच्छत्तानजुहोत्ततो वै देवा असुरानजयन्यदजयन्तज्जयानां जयत्वꣳ स्पर्धमानेनैते होतव्या जयत्येव तां पृतनाम्—२५) [ उप पञ्चविꣳशतिश्च ]॥४॥

अग्निर्भूतानामधिपतिः स मावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाꣳ समुद्रः स्रोत्यानामन्नꣳ साम्राज्यानामधिपति तन्मावतु सोम ओषधीनाꣳ सविता प्रसवानाꣳ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परेवरे (१) ततास्ततामहा इह मावत। अस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्—१७) [ अवरे सप्तदश च ]॥५॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानपश्यन् तानभ्यातन्वत यद्देवानां कर्मासीदार्ध्यत तद्यदसुराणां न तदार्ध्यत येन कर्मणेर्त्सेत्तत्र होतव्या ऋध्नोत्येव तेन कर्मणा यद्विश्वे देवाः समभरन् तस्मादभ्याताना वैश्वदेवा यत् प्रजापतिर्जयान् प्रायच्छत्तस्माज्जयाः प्राजापत्याः (१) यद्राष्ट्रभृद्भीराष्ट्रमाददत तद्राष्ट्रभृताꣳ राष्ट्रभृत्त्वं ते देवा अभ्यातानैरसुरानभ्यातन्वत जयैरजयन् राष्ट्रभृद्भीराष्ट्रमाददत यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्यातानानामभ्यातानत्वं यज्जयैरजयन् तज्जयानां जयत्वं यद्राष्ट्रभृद्भीराष्ट्रमाद

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दत्त तद्राष्ट्रभृतां राष्ट्रभृत्त्वं ततो देवा अभवन् परासुरा यो भ्रातृव्यवान्त्स्यात् सः ( २ ) एतान् जुहुयादभ्यातानैरेव भ्रातृव्यानभ्यातनुते जयैर्जयति राष्ट्रभृद्भीराष्ट्रमादत्ते भवत्यात्मना परास्य भ्रातृव्यो भवति— १८ ) [ प्राजापत्याः सोष्टादश च ] ॥ ६ ॥ ऋता षाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवः सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवाः प्रजापतिर्विश्वकर्मा मनः ( १ ) गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयइषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा भुवनस्य पते यस्य त उपरि गृहा इह च । स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् । परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो दूरे हेतिरमृडयः ( २ ) मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवश्चारुः कृपणाकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा स नो भुवनस्य पते यस्य त उपरि गृहा इह च । उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ— ४६ ) [ मनो मृडयः षट्चत्वारिꣳशच्च ] ॥ ७ राष्ट्रकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



राष्ट्रेणैवास्मै राष्ट्रमवरुन्धे राष्ट्रमेव भवत्यात्मने होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो
राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमवरुन्धे वसिष्ठः समानानां भवति ग्रामकामाय होतव्या
राष्ट्रं वै राष्ट्रभृतो राष्ट्रꣳ सजाता राष्ट्रेणैवास्मै राष्ट्रꣳ सजातानवरुन्धे ग्रामी ( १ ) एव भवत्य
धिदेवने जुहोत्यधिदेवन एवास्मै सजातानवरुन्धे त एनमवरुद्धा उपतिष्ठन्ते रथमुख
ओजस्कामस्य होतव्या ओजो वै राष्ट्रभृत ओजो रथ ओजसैवास्मा ओ-
जोवरुन्ध ओजस्व्येव भवति यो राष्ट्रादपभूतः स्यात्तस्मै होतव्या यावन्तोस्य रथाः
स्युस्तान् ब्रूयाद् युङ्ग्ध्वमिति राष्ट्रमेवास्मै युनक्ति ( २ ) आहुतयो वा एतस्या क्लृप्ता यस्य
राष्ट्रं न कल्पते स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभिजुहुयादाहुतीरेवास्य कल्पयति ता
अस्य कल्पमाना राष्ट्रमनुकल्पते सङ्ग्रामे संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रे खलु वा एते
व्यायच्छन्ते ये सङ्ग्रामꣳ संयन्ति यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ सङ्ग्राम
मान्धुक इध्मः ( ३ ) भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रतिवेष्टयन्ति य उन्मा-
द्येत्तस्मै होतव्या गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येते खलु वै गन्धर्वाप्सरसो
यद्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति तेनैवैनाञ्छमयति नैयग्रोध औदुम्बर आ-
श्वत्थः प्लाक्ष इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः स्व एवैनान् ( ४ ) आयतने शमय

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भिचरंता प्रतिलोमꣳ होतव्याः प्राणानेवास्य प्रतीचः प्रतियौति तं ततो येन केन च स्तृणुते स्वकृत इरिणे जुहोति प्रदरे वैतद्वा अस्यै निर्ऋतिगृहीतं निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राहयति यद्वाचः क्रूरं तेन वषट्करोति वाच एवैनं क्रूरेण प्रवृश्चति ताजगार्त्तिमार्च्छति यस्य कामयेतान्नाद्यम् ( ५ ) आददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि संगृह्णीयात् प्रजापतिर्वै भुवनस्य पतिः प्रजापतिनैवास्यान्नाद्यमादत्त इदमहममुष्यामुष्यायण स्यान्नाद्यꣳ हरामीत्याहान्नाद्यमेवास्य हरति षड्भिर्हरति षड्वा ऋतवः प्रजापतिनैवास्यान्ना द्यमादायर्तवोऽस्मा अनु प्र यच्छन्ति ( ६ ) यो ज्येष्ठबन्धुरपभूतः स्यात्तꣳ स्थलेऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा तस्मै होतव्या वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं वर्ष्मणैवैनंवर्ष्म समानानां गमयति चतुःशरावो भवति दिक्ष्वेव प्रतितिष्ठति क्षीरे भवति रुचमेवास्मिन् दधात्युद्धरति शृतत्वाय सर्पिष्वान् भवति मेध्यत्वाय चत्वार आर्षेयाः प्राश्नन्ति दिशा मेव ज्योतिंषि जुहोति—४९ ) [ग्रामी युनक्तीध्म एनमन्नाद्यंयच्छन्त्येकान्नपञ्चाशच्च]

॥८॥ देविका निर्वपेत् प्रजाकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै प्रजाश्छन्दोभिरेवा-स्मै प्रजाःप्रजनयति प्रथमं धातारं करोति मिथुनी एव तेन करोत्यन्वेवास्मा अनुमतिर्म-न्यते राते राका प्र सिनीवाली जनयति प्रजास्वेव प्रजातासु कुह्वा वाचं दधात्येता ए-व निर्वपेत् पशुकामश्छन्दाꣳसि वैदेविकाच्छन्दाꣳसि ( १ ) इव खलु वै पशवश्छन्दोभिरेवास्मै प-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शून् प्रजनयति प्रथमं धातारं करोति प्रैव तेन वापयत्यन्वेवास्मा अनुमतिर्मन्यतेराते राका प्रसिनीवाली जनयति पशूनेव प्रजातान् कुह्वा प्रतिष्ठापयत्येता एव निर्वपेद्ग्रामकाम-श्छदाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै ग्रामश्छन्दोभिरेवास्मै ग्रामम् ( २ ) अवरुन्धे मध्यतो धातारं करोति मध्यत एवैनं ग्रामस्य दधात्येता एव निर्वपेज्ज्योगामयावी छ-न्दाꣳसि वै देविकाच्छन्दाꣳसि खलु वा एतमभिमन्यन्ते यस्य ज्योगामयति छन्दोभिरेवै-नमगदं करोति मध्यतो धातारं करोति मध्यतो वा एतस्याक्लृप्तं यस्य ज्योगामयति मध्य-त एवास्य तेन कल्पयत्येता एव निः ( ३ ) वपेद्यं यज्ञो नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोपनमन्ति यं यज्ञो नोपनमति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं यज्ञो नमत्येता एव निर्वपेदीजानश्छन्दाꣳसि वै देविका यातयामानीव खलु वा एतस्य छन्दाꣳसि य ईजान उत्तमं धातारं करोति ( ४ ) उपरिष्टादेवास्मै छन्दाꣳस्ययातयामान्यवरुन्ध उपैनमुत्तरो यज्ञो नमत्येता एव निर्वपेद्यं मेधा नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोपनमन्ति यं मेधा नोपनम-ति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं मेधा नमत्येता एव नि-र्वपेत् ( ५ ) रुक्कामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक् छन्दोभिरेवास्मिन् रु-चं दधाति क्षीरे भवन्ति रुचमेवास्मिन् दधति मध्यतो धातारं करोति मध्यत एवैनꣳ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रुचो दधाति गायत्री वा अनुमतिस्त्रिष्टुग्राका जगती सिनीवाल्यनुष्टुप् कुहूर्धाता वषट्कारः पूर्वपक्षो राका परपक्षः कुहूरमावास्या सिनीवाली पौर्णमास्यनुमतिश्चन्द्रमा धाताऽष्टौ (६) वसवोऽष्टाक्षरा गायत्र्येकादश रुद्रा एकादशाक्षरा त्रिष्टुब् द्वादशादित्या द्वादशाक्षरा जगती प्रजापतिरनुष्टुब् धाता वषट्कार एतद्वै देविकाः सर्वाणि च छन्दाꣳसि सर्वाश्च देवता वषट्कारस्ता यत् सह सर्वा निर्वपेदीश्वरा एनं प्रदहो द्वे प्रथमे निरुप्य धातुस्तृतीयं निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनं न प्रदहन्ति (७) अथो यस्मै कामाय निरुप्यन्ते तमेवाभिरुपाप्नोति—१) [ छन्दाꣳसि ग्रामं निष्करोतिवपे दृष्टौ दहन्तिनवंच ] ॥ १ ॥ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शन्न एधि द्विपदे शं चतुष्पदे । वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या । आवः क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः । यत् सायंप्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उपधत्ते ( १ ) यजमानोऽहोरात्राणि वा एतस्येष्टका काय आहिताग्निर्यत् सायम्प्रातर्जुहोत्यहोरात्राण्येवास्वेष्टकाः कृत्वोपधत्ते दश समानत्र जुहोति दशाक्षरा विराड्विराजमेवास्वेष्टकां कृत्वोपधत्तेऽथो विराज्येव यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत्ततोऽर्वाचीनम् ( २ ) रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्तोष्पतीयं प्रयायाद् रुद्र एनं भूत्वाग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति भागधेयेनैवैनꣳ शमयति नार्तिमार्च्छति यजमानो यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं जुहोति तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम आहुतिं जुहोति तादृगेव तदहुतमस्य वास्तोष्पतीयꣳ स्यात् (३) दक्षिणो युक्तो भवति सव्योऽयुक्तोथ वास्तोष्पतीयं जुहोत्युभयमेवाकरपरिवर्गमेवैनꣳ शमयति यदेकया जुहुयाद्दर्विहोमं कुर्यात् पुरोनुवाक्यामनूच्य याज्यया जुहोति स देवत्वाय यद्धुत आदध्याद् रुद्रं गृहानन्वारोहयेद्यदवक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा यज्ञवेशसं वा दहनं वा तादृगेव तदयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयति (४) एष वा अग्नेर्योनिः स्व एवैनं योनौ समारोहयत्यथो खल्वाहुर्यदरण्योः समारूढो नश्येदुदस्याग्निः सीदेत् पुनराधेयः स्यादिति या ते अग्ने यज्ञिया तनूस्तयेह्यारोहेत्यात्मन्त्समारोहयते यजमानो वा अग्नेर्योनिःस्वायामेवैनं योन्याꣳसमारोहयते—४५) [ धत्ते ऽर्वाचीनꣳ स्यात् समारोहयति पञ्चचत्वारिꣳशच्च ] ॥ १० ॥ त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा । हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे । सुगार्हपत्याः समिषो दिदीह्यस्मद्रियक्संमिमीहि श्रवाꣳसि । त्वञ्च सोम नो वशो जीवातुं न मरामहे । प्रियस्तोत्रो वनस्पतिः । ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः ( १ ) पवित्रमत्येति रेभन् । आ विश्वदेवꣳ सत्पतिꣳ सूक्तैरद्या वृणीमहे । सत्यसवꣳ सवितारम् । आ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् । यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् । मा नस्तोके तनये मा न आयुषि मा नो गोषु मा ( २ ) नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते । उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः । गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन् । हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् । बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाꣳ अगायत् । एन्द्र सानसिꣳ रयिम् ( ३ ) स जित्वानꣳ सदासहम् । वर्षिष्ठमूतये भर । प्रससाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् । त्वꣳ सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो । भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः । भुवो नॄꣳश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रः ( ४ ) विश्वचर्षणे । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । सत्यं चित्रश्रवस्तमम् । मित्रो जनान्यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवद्विधेम । प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात् यत् ( ५ ) चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मि॒नीमसि॒ द्यवि॑द्यवि । यत्किञ्चे॒दं व॑रुण॒ दैव्ये॒ जने॑भिद्रो॒हं म॑नु॒ष्या॑श्चरा॑मसि । अचि॑त्ती॒य त्तव॒ धर्मा॑ युयो॒पि॒म मा न॒स्तस्मा॒देन॑सो देव रीरिषः । कि॒त॒वासो॒ यद्रि॑रि॒पुर्न॑ दी॒वि यद्वा॑ घा स॒त्यमु॒त यन्न वि॒द्म । सर्वा॒ ता विष्य॑ शिथि॒रा (६) इ॒व दे॒वाथा॑ ते स्याम वरुण प्रि॒यासः—७) [ सोमो॒ मा श॒र्यं मन्त्रो॒ यच्चि॒छ्थि॒रा स॒प्तच॑ ] ॥ ११ ॥ विवा ( २२१ ) आवा॑यो ( ११३ ) इ॒मे ( ३९२ ) चि॒त्त ( ७५ ) म॒ग्नि ( ६७ ) दे॑वा ( ११८ ) ऋ॑ता॒षा ( १४६ ) द्रा॒घ्रूकां॑माय॒ ( ३४९ ) देवि॑का॒ ( ३४९ ) वास्तो॒ ( २४५ ) स्त्व ( ३०७ ) मेकां॑दश ( २३९२ ) ॥ ११ ॥ इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थः प्रपाठकः ॥

ॐ पू॒र्णा प॒श्चादु॒त पू॒र्णा पु॒रस्ता॒दुन्म॑ध्य॒तः पौ॑र्णमा॒सी जि॑गाय । तस्यां॑न्दे॒वा अधि॑ सं॒वस॑न्त उत्त॒मे नाक॑ इ॒ह मा॑दयन्ताम् । यत्ते॑ दे॒वा अद॑धुर्भाग॒धेय॒ममा॑वास्ये सं॒वस॑न्तो महि॒त्वा । सा नो॑ य॒ज्ञं पि॑पृहि विश्ववारे र॒यिन्नो॑ धेहि सुभगे सु॒वीर॑म् । नि॒वेश॑नी स॒ङ्गम॑नी॒ वसू॑नां॒ विश्वा॑ रू॒पाणि॒ वसू॑न्यावे॒शय॑न्ती । स॒ह॒स्र॒पो॒षꣳ सु॒भगा॒ ररा॑णा॒ सा न॒ आग॒न्वर्च॑सा ( १ ) सं॒वि॒दा॒ना । अग्नी॑षोमौ प्रथ॒मौ वी॒र्ये॑ण॒ वसू॑न् रु॒द्राना॑दि॒त्याणि॒ह जि॑न्वतम् । मा॒ध्यꣳ हि पौ॑र्णमा॒सञ्जु॑षेथां॒ ब्रह्म॑णा वृ॒द्धौ सु॑कृ॒तेन॑ सा॒ताव॒थास्मभ्य॑ꣳ स॒हवी॑राꣳ र॒यिन्नि य॑च्छतम् । आ॒दि॒त्याश्चाङ्गि॑रसश्चा॒ग्नीनाद॑धत॒ ते द॑र्शपू॒र्णमा॒सौ प्रैप्स॒न्तेषा॒मङ्गि॑रसां॒ निरु॑प्तꣳ ह॒विरा॒सी॒दथा॑दि॒त्या ए॒तौ होमा॑वपश्य॒न्ताव॑ जुह॒वुस्तत॒ो वै ते द॑र्शपू॒र्णमा॒सौ ( २ ) पूर्वे॑ आल॑भन्त दर्शपू

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



र्णमासावालभमान एतौ होमौ पुरस्तात् जुहुयात् साक्षादेव दर्शपूर्णमासावालभते ब्रह्म वादिनो वदन्ति स त्वै दर्शपूर्णमासावालभेत य एनयोरनुलोमञ्च प्रतिलोमञ्च विद्यादित्य मावास्याया ऊर्ध्वन्तदनुलोमं पौर्णमास्यै प्रतीचीनन्तत् प्रतिलोमं यत् पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेतामुमपक्षीयमाणमन्वप ( ३ ) क्षीयेत सारस्वतौ होमौ पुरस्तात् जुहुयादमावास्या वै सरस्वत्यनुलोममेवैनावालभतेऽमुमाप्यायमानमन्वाप्यायत आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत्सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालं यदाग्नेयो भवत्यग्निर्वै यज्ञमुखं यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवारभ्य प्रतनुते सरस्वत्यै ( ४ ) चरुर्भवति सरस्वते द्वादशकपालोमावास्या वै सरस्वती पूर्णमासः सरस्वान्तावेव साक्षादारभत ऋध्नोत्याभ्यां द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै मिथुनौ गावौ दक्षिणा समृद्ध्यै—२५ ) [ वर्चसा दर्शपूर्णमासावप सरस्वत्यै पञ्चविꣳशतिश्च ]॥ १ ॥

ऋषयो वा इन्द्रं प्रत्यक्षन्नापश्यन्तं वसिष्ठः प्रत्यक्षमपश्यत्सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो माप्रवोच इति तस्मा एतान् स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति ( १ ) आह देवा वै क्षयो देवेभ्य एव यज्ञं प्राह प्रेतिरसि धर्माय त्वा धर्मं जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एव यज्ञं प्राहा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्वितिरसि दिवे त्वा दिवं जिन्वेत्याहैभ्य एव लोकेभ्यो यज्ञं प्राह विष्टम्भोसि वृष्ट्यै त्वा वृष्टिं जिन्वेत्याह वृष्टिमेवाव ( २ ) रुन्धे प्रवास्यनुवासीत्याह मिथुनत्वायो शिगसि वसुभ्यस्त्वा वसूञ्जिन्वेत्याहाष्टौ वसव एकादश रुद्रा द्वादशादित्या एतावन्तो वै देवास्तेभ्य एव यज्ञं प्राहौजोसि पितृभ्यस्त्वा पितॄ न्जिन्वेत्याह देवानेव पितॄननुसन्तनोति तन्तुरसि प्रजाभ्यस्त्वा प्रजाजिन्व ( ३ ) इत्याह पितॄनेव प्रजा अनुसन्तनोति पृतनाषाडसि पशुभ्य-स्त्वा पशू न्जिन्वेत्याह प्रजा एव पशूननुसन्तनोति रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौषधी-ष्वेव पशून् प्रतिष्ठापयत्यभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेत्याहाभिजित्या अधिप-तिरसि प्राणाय त्वा प्राणम् ( ४ ) जिन्वेत्याह प्रजास्वेव प्राणान् दधाति त्रिवृदसि प्रवृद-सीत्याह मिथुनत्वाय सꣳरोहोसि नीरोहोसीत्याह प्रजात्यै वसुकोसि वेषश्रिरसि वस्यष्टिरसी-त्याह प्रतिष्ठित्यै—३० ) [ इत्यव जिन्व प्राणं त्रिꣳशच्च ] ॥ २ ॥

अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्यवैनान्बाधे प्रत्येनान्नुदेस्मिन् क्षयेस्मिन् भूमिलोके योस्मान् द्वेष्टि यञ्च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामीन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण ( १ ) सहजान् विश्वे-भिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वज्रेणापरजानिन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति । यत्ते अग्ने तेजस्तेनाहन्तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासम्—४६ ) [ वज्रेण षट्चत्वारिꣳशच्च ] ॥ ३ ॥ ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । आगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति । नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः । ये देवा यज्ञहनो यज्ञमुषोन्तरिक्षेध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । यास्ते रात्रीः सवितः ( १ ) देवयानीरन्तरा द्यावापृथिवी वियन्ति । गृहैश्च सर्वैः प्रजयान्वग्रे सुवोरुहाणास्तरता रजाꣳसि । ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः । तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आधेह्येनम् । यज्ञहनो वै देवा यज्ञमुषः ( २ ) सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य । ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेत्यप वै सोमेनेजानाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुदवसानीयं निर्वपेदग्निः सर्वा देवताः ( ३ ) पाङ्क्तो यज्ञो देवताश्चैव यज्ञश्चावरुन्धे गायत्रो वा अग्निर्गायत्रछन्दास्तं छन्दसा व्यर्धयति यत्पञ्चकपालं करोत्यष्टाकपालः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कार्योष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रछन्दाः स्वेनैवैनं छन्दसा समर्धयति पङ्क्तौ याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैवयज्ञान्नैति—४३ ) [ सवितर्यज्ञमुषो देवतास्त्रिचत्वारिꣳशच्च ] ॥ ४ ॥ सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः। सक्ष शूष सवितर्विश्वचर्षण एतेभिः सोमनामभिर्विधेम ते तेभिः सोमनामभिर्विधेम ते । अहं परस्तादहमवस्तादहं ज्योतिषा वितमो ववार । यदन्तरिक्षन्तदु मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानाम् ( १ ) आसमुद्रादान्तरिक्षात् प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो वर्षयन्तून्नम्भय पृथिवीम्भिन्धीदन्दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिम् । पशवो वा एते यदादित्य एष रुद्रो यदग्निरोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्तर्दधात्यथो ओषधीष्वेव पशून् ( २ ) प्रतिष्ठापयति कविर्यज्ञस्य वितनोति पन्थान्नाकस्य पृष्ठे अधिरोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् । यास्ते विश्वाः समिधः सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः । तास्ते गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म । आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना रायास्वगाकृतो मह्यं यजमानाय ( ३ ) तिष्ठ — १ [ समानानां पशून् यजमानायैकञ्च ] ॥ ५ ॥ सन्त्वा नह्यामि पयसा घृतेन सन्त्वा नह्याम्यप ओषधीभिः । सन्त्वा नह्यामि प्रजयाहमद्य सा दीक्षि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ता संनवो वाजमस्मे । प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इह । सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । इमं विष्यामि वरुणस्य पाशम् ( १ ) यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि । प्रेह्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यन्ददताꣳ रुद्रावसृष्टासि युवा नाम मा मा हिꣳसी वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीः सादयामि विश्वस्य ते विश्वावतो वृष्णियावतः ( २ ) तवाग्ने वामीरनु सन्दृशि विश्वा रेताꣳसि धिषीया गन्देवान् यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन् सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमातिष्ठतानु । वातस्य पत्मन्निड ईडिताः—३० ) [ पाशं वृष्णियावतस्त्रिꣳशच्च ] ॥ ६ ॥

वषट्कारो वै गायत्रियै शिरोच्छिनत्तस्यै रसः परापतत्स पृथिवीं प्राविशत्स खदिरोभवद्यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति सरसा अस्याहुतयो भवन्ति तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोभवत्तत्पर्णस्य पर्णत्वं यस्य पर्णमयी जुहूः ( १ ) भवति सौम्या अस्याहुतयो भवन्ति जुषन्तेस्य देवा आहुतीर्देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति ब्रह्म वै पर्णो विण्मरुतोन्नं विण्मारुतोश्वत्थो यस्य पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्ब्रह्मणै-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वाच॒मव॑रुन्धे॒थो॒ ब्रह्म॒ ( २ ) ए॒व वि॑श्यध्यूह॑ति रा॒ष्ट्रं वै प॒र्णो विडश्व॒त्थो यत् प॑र्णम॒यी जु॒हूर्भव॑त्याश्व॑त्थ्युप॒भृद्रा॒ष्ट्रमे॒व वि॒श्यध्यूह॑ति । प्र॒जाप॑ति॒र्वा अ॑जुहो॒त्सा यत्राहु॑तिः प्र॒त्यति॑ष्ठ॒-त्ततो॒ विक॑ङ्कत॒ उद॑तिष्ठ॒त्ततः॑ प्र॒जा अ॑सृजत॒ यस्य॒ वैक॑ङ्कती ध्रु॒वा भव॑ति॒ प्रत्ये॒वास्याहु॑तय-स्तिष्ठ॒न्त्यथो॒ प्रैव जा॑यत ए॒तद्वै स्रु॒चाम् ( ३ ) रू॒पं यस्यै॒वꣳरू॑पाः स्रु॒चो॒ भव॑न्ति॒ सर्वा॑-ण्ये॒वैनाꣳ॑रू॒पाणि॑ प॒शू॒नामुप॑तिष्ठन्ते॒ नास्याप॑रूपमा॒त्मञ्जा॑यते— १७ ) [ जु॒हूर्ब्रह्म॑ स्रु॒चाꣳ स॒प्तद॑श च ] ॥ ७ ॥ उ॒प॒या॒मगृ॑हीतोसि प्र॒जाप॑तये॒ त्वा॒ ज्योति॑ष्मते॒ ज्योति॑ष्मन्तं गृह्णा॒मि॒ दक्षा॑य दक्ष॒वृधे॑ रा॒तं दे॒वेभ्यो॑ऽग्निजि॒ह्वेभ्य॑स्त्वर्ता॒युभ्य॒ इन्द्र॑ज्येष्ठेभ्यो॒ वरु॑णराजभ्यो॒ वाता॑पि-भ्यः प॒र्जन्या॑त्मभ्यो॒ दि॒वे त्वा॒न्तरि॑क्षाय त्वा॒ पृ॒थि॒व्यै त्वापे॑न्द्र द्वि॒ष॒तो मनो॑प॒ जिज्या॑-सतो॒ ज॒ह्यप॒ यो नो॑रातीय॒ति॒ तं ज॑हि प्रा॒णाय॑ त्वापा॒नाय॑ त्वा व्या॒नाय॑ त्वा स॒ते त्वा-स॑ते त्वा॒द्भ्यस्त्वौष॑धीभ्यः ( १ ) विश्वे॑भ्यस्त्वा भू॒तेभ्यो॒ यतः॑ प्र॒जा अक्खि॑द्रा॒अजा॑यन्त॒ तस्मै॑ त्वा प्र॒जाप॑तये विभू॒दाम्ने॒ ज्योति॑ष्मते॒ ज्योति॑ष्मन्तं जुहो॒मि —१४ ) [ ओष॑धीभ्य॒श्चतु॑र्दश च ॥ ८ ॥ यां वा अ॑ध्व॒र्युश्च॒ यज॑मानश्च दे॒वता॑मन्तरि॒तस्तस्या॒ आवृ॑श्च्येते प्राजाप॒त्यं द॑धिग्र॒हं गृ॑-ह्णीयात् प्र॒जाप॑तिः॒ सर्वा॑ दे॒वता॑ दे॒वता॑भ्य ए॒व निह्नु॑वाते ज्ये॒ष्ठो वा ए॒ष ग्रहा॑णां॒ यस्यै॒ष गृ॒ह्यते॒ ज्यैष्ठ्य॑मे॒व गच्छ॑ति॒ सर्वा॑सां॒ वा ए॒तद्दे॒वता॑नाꣳ रू॒पं यदे॒ष ग्रहो॒ यस्यै॒ष गृ॒ह्यते॒ सर्वा॑ण्ये॒वैनꣳ॑ रू॒पाणि॑ प॒शू॒नामुप॑तिष्ठन्त उ॒प॒या॒मगृ॑हीतः ( १ ) अ॒सि॒ प्र॒जाप॑तये त्वा॒ ज्योति॑ष्मते॒ ज्यो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तिष्मन्तं गृह्णामीत्याह ज्योतिरेवैनꣳ समानानांकरोत्यग्निजिह्वेभ्यस्त्वर्तायुभ्य इत्याहैतावती-र्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्यपेन्द्रद्विषतो मन इत्याह भ्रातृव्यापनुत्यै प्राणाय त्वा पानाय त्वेत्याह प्राणानेव यजमाने दधाति तस्मै त्वा प्रजापतये विभूदाम्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि (२) इत्याह प्रजापतिः सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोत्याज्यग्रहं गृह्णीयात्तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्म-वर्चसं वै सोमो ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णीयात् पशुकामस्योर्ग्वै दध्यूर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे—४३ ) [ उपयामगृहीतो जुहोमि त्रिचत्वारिꣳशच्च ] ॥ ९ ॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः। स्वादोः स्वादीयः स्वादुना सृजा समत ऊषु मधु मधुनाभियोधि। उपयामगृहीतोसि प्रजापतये त्वा जुष्टंगृह्णाम्येष ते योनिः प्रजापतये त्वा। प्राणग्रहान् गृह्णात्येतावद्वा अस्ति यावदेते ग्रहास्तोमाच्छन्दाꣳसि पृष्ठानि दिशो यावदेवास्ति तत् (१) अवरुन्धे ज्येष्ठा वा एतान् ब्राह्मणाः पुराविदामक्रन्तस्मात्तेषाꣳ सर्वा दिशोभिजिता अभूवन् यस्यै ते गृह्यन्ते ज्यैष्ठ्यमेव गच्छत्यभि दिशो जयति पञ्चगृह्यन्ते पञ्च दिशः सर्वास्वेव दिक्ष्वृध्नुवन्ति नव नव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधति प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राणग्रहाः (२) प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति दशमेहन् गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा एतत् प्रजा यन्ति यद्वा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मदे॒व्यं योने॒श्च्यव॑ते दश॒मेह॑न् वामदे॒व्यं योनै॒श्च्यव॒ते यद्द॑श॒मेह॑न् गृह्यन्ते॑ प्रा॒णेभ्य॑ ए॒व तत् प्र॒जा न य॑न्ति—३७ ) [ तत् प्राणग्र॒हाः सप्तत्रि॑ꣳशच्च ] ॥ १० ॥

प्र दे॒वं दे॒व्या धि॒या भर॑ता जा॒तवे॑दसम् । ह॒व्या नो॑ वक्षदानु॒षक् । अ॒यमु॒ष्य प्र दे॑व॒युर्होता॑ य॒ज्ञाय॑ नीयते । रथो॒ न योर॒भीवृ॑तो घृणी॑वान् चेतति॒ त्मना॑ । अ॒यम॒ग्निरु॑रुष्यत्य॒मृता॑दि॒व ज न्म॑नः । सह॑सश्चि॒त्सही॑यान्दे॒वो जी॒वात॑वे कृ॒तः । इडा॑यास्त्वा प॒दे व॒यन्नाभा॑ पृथि॒व्या अधि॑ । जात॑वेदो॒ निधी॑मह्य॒ग्ने ह॒व्याय॒ वोढ॑वे ( १ ) । अग्ने॒ विश्वे॑भिः स्वनीक दे॒वैरूर्णा॑वन्तं प्रथ॒मः सी॑द॒ योनि॑म् । कु॒ला॒यिनं॑ घृ॒तव॑न्तꣳ सवि॒त्रे य॒ज्ञन्न॑य॒ यज॑मानाय सा॒धु । सीद॑ होतः॒ स्व उ॑ लो॒के चि॑कि॒त्वान्त्सा॒दया॑ य॒ज्ञꣳ सु॑कृ॒तस्य॒ योनौ॑ । दे॒वा॒वीर्दे॒वान् ह॒विषा॑ यजा॒स्यग्ने॑ बृ॒हद्यज॑माने॒ वयो॑ धाः । नि होता॑ होतृ॒षद॑ने॒ विदा॑नस्त्वे॒षो दी॑दि॒वाꣳ अ॑सदत्सु॒दक्षः॑ । अद॑ब्धव्रत-प्रम॒ति॒र्वसि॑ष्ठः सहस्रम्भ॒रः शुचि॑जिह्वो अ॒ग्निः । त्वं दू॒तस्त्वम् ( २ ) उ॒ नः॒ प॒र॒स्पास्त्वं वस्य॒ आ वृ॑षभ प्रणे॒ता । अग्ने॑ तो॒कस्य॑ न॒स्तने॑ त॒नूना॒मप्र॑युच्छ॒न्दीद्य॑द्बोधि॒ गो॒पाः । अ॒भि त्वा॑ देव सवित॒रीशा॑नं॒ वार्या॑णाम् । सदा॑वन् भा॒गमी॑महे । म॒ही द्यौः पृ॑थि॒वी च॑ न इ॒मं य॒ज्ञं मि॑मिक्षताम् । पि॒पृ॒तान्नो॒ भरी॑मभिः । त्वाम॑ग्ने॒ पुष्क॑रा॒दध्यथ॑र्वा॒ निर॑मन्थत । मू॒र्ध्नो विश्व॑स्य वा॒घतः॑ । तमु॑ ( ३ ) त्वा॒ द॒ध्यङ्ङृषिः॑ पु॒त्र ई॑धे॒ अथ॑र्वणः । वृ॒त्र॒हणं॑ पुर॒न्दर॑म् । तमु॑ त्वा पा॒थ्यो वृषा॒ समी॑धे दस्यु॒हन्त॑मम् । ध॒न॒ञ्ज॒यꣳ रणे॑रणे । उ॒त ब्रु॑वन्तु ज॒न्तव॒ उद॒ग्निर्वृ॑त्र॒हाज॑नि ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धनञ्जयो रणेरणे । आ यꣳ हस्ते न खादिनꣳ शिशुं जातं न बिभ्रति । विशामग्निꣳ स्वध्वरम् । प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ निषीदतु । आ ( ४ ) जातं जातवेदसि प्रियꣳ शिशीतातिथिम् । स्योन आगृहपतिम् । अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः । त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे । तमर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् । यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणिप्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते यत्र ( ५ ) पूर्वे साध्याः सन्ति देवाः— ४ ) [ वोढवे त्वम्वा यत्रचत्वारि च ] ॥ ११ ॥

पूर्णा ( २२५ ) यो ( २३० ) ऽग्निना ( ९६ ) ये ( ११२ ) सूर्यः ( १५१ ) सं(१३० वषट्कार ( १६७ ) उपयामगृहीतो ( ६४ ) यां ( १४३ ) त्वे ( १३७ ) प्रै ( २५४ ) कादश (१७९०) ॥ ११ ॥ इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चमः प्रपाठकः ॥ प्रजापति ( २२४८ ) यो वा (२३३५) अग्ने (१८५७) विवै (२३९२) पूर्णा (१७९०) पञ्च(१०६२२) ॥५॥ तृतीयकाण्डः समाप्तः॥

ओम् युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् । युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान् । युक्तेन मनसा वयं देवस्य सवितुःसवे । सुवर्गेयाय शक्त्यै । युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इत् ( १ ) मही देव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्यं सवितुःपरिष्टुतिः । युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति पथ्येव सूराः । शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः । यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः । यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना । देव सवितः प्रसुव यज्ञं प्रसुव ( २ ) यज्ञपतिं भगाय दिव्यो गन्धर्वः । केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः । इमं नो देव सवितर्यज्ञं प्रसुव देवायुवꣳ सखिविदꣳ सत्राजितं धनजितꣳ सुवर्जितम् । ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्वदभ्रिरसि नारिः ( ३ ) असि पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वदभ्रिरसि नारिरसि त्वया वयꣳ सधस्थ आग्निꣳ शकेम खनितुं पुरीष्यं जागतेन त्वा छन्दसाऽऽददेऽङ्गिरस्वद्धस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् । तया ज्योतिरजस्रमिदग्निं खात्वी न आभरानुष्टुभेन त्वा छन्दसा ( ४ ) आददेऽङ्गिरस्वत्—३ ) [ इत् सुव नारिश्छन्दसा त्रीणि च ] ॥ १ ॥ इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या । तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती । प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संवतम् । दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्यामधि योनिः । युञ्जाथाꣳ रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये । प्रतूर्वन् ( १ ) एह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि । उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन् । पूष्णा सयुजा सह । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेह्यग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामोऽग्निं पुरीष्यमङ्गिरस्वद्भरामः । अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य ( २ ) पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान । आगत्य वाज्यध्वनः सर्वा मृधो वि धूनुते । अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते । आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयम् । द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रस्ते योनिः । विख्याय चक्षुषा त्वमभितिष्ठ ( ३ ) पृतन्यतः । उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन् । वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः । उदक्रमीद्द्रविणोदा वाज्यर्वाकः स लोकꣳ सुकृतं पृथिव्याः । ततः खनेम सुप्रतीकमग्निꣳ सुवो रुहाणा अधि नाक उत्तमे । अपो देवी रुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासाꣳ स्थानादुज्जिहतामोषधयः सुपिप्पलाः । जिघर्मि ( ४ ) अग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नꣳ रभसं विदानम् । आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व । मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणः । परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दधद्रत्नानि दाशुषे । परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारम् ( ५ ) भङ्गुरावतः । त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः—२० ) [ प्रतूर्वन्नूर्ध्वस्यतिष्ठजिघर्मिभेत्तारंविꣳशतिश्च ]॥ २॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि । ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम् । शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि । अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठम् । वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व । शर्म च स्थः ( १ ) वर्म च स्थो अच्छिद्रे बहुले उभे । व्यचस्वती संवसाथां भर्तमग्निं पुरीष्यम् । संवसाथाꣳ सुवर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् । पुरीष्योऽसि विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने । त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः । तमु त्वा दध्यङ्ङृषिः पुत्र ईधे ( २ ) अथर्वणः । वृत्रहणं पुरन्दरम् । तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयꣳ रणेरणे । सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ । देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः । नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः । सꣳसीदस्व महाꣳ असि शोचस्व ( ३ )

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् । जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु । दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् — २७ ) [ स्थ ईधे शोचस्व सप्तविꣳशतिश्च ] ॥ ३ ॥ सन्ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्विलिष्टम् । देवानां यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यम् । सुजातो ज्योतिषा सह शर्म वरूथमासदः सुवः । वासो अग्ने विश्वरूपꣳ सं व्ययस्व विभावसो । उदु तिष्ठ स्वध्वरावा नो देव्या कृपा । दृशे च भासा बृहता सुशुक्वनिराऽग्ने याहि सुशस्तिभिः ( १ ) । ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे । स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि तमाꣳस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः । स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः । शिवो भव ( २ ) प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभि शूशुचो मान्तरिक्षं मा वनस्पतीन् । प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा । रासभो वां कनिक्रदत्सुयुक्तो वृषणा रथे । स वामग्निं पुरीष्यमाशुर्दूतो वहादितः । वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम् । अग्न आ याहि ( ३ ) वीतय ऋतꣳ सत्यम् । ओषधयः प्रति गृह्णीताग्निमेतꣳ शिवमायन्तमभ्यत्र युष्मान् । व्यस्यन्विश्वा अमतीररातीर्निषीदन्नो अप दुर्मतिꣳ हनत् । ओषधयः प्रति मोदध्वमेनं पुष्पावतीः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सुपिप्पला: । अयं वो गर्भ ऋत्वियः प्रत्न॑ᳪ सधस्थमासदत्—३६ ) [ सुशस्तिभिर्भव याहि षट्त्रिᳪशच्च ] ॥ ४ ॥ वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः । सुशर्मणो बृहतः शर्मणि स्यामग्नेरहᳪ सुहवस्य प्रणीतौ । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । मित्रः ( १ ) सᳪसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जातवेदसमग्निं वैश्वानरं विभुम् । अयक्ष्माय त्वा सᳪसृजामि प्रजाभ्यः । विश्वे त्वा देवा वैश्वानराः सᳪसृजन्त्वाऽऽनुष्टुभेन छन्दसाऽङ्गिरस्वत् । रुद्राः सम्भृत्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते । सᳪसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु ( २ ) ताम् । सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां दधातु हस्तयोः । उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया । माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ । मखस्य शिरोऽसि यज्ञस्य पदे स्थः । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वत् पृथिव्यसि रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदन्तरिक्षमसि(३) आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद् द्यौरसि विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद्दिशोऽसि ध्रुवासि धारया मयि प्रजाᳪ रायस्पोषं गौपत्यᳪ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सुवीर्यं सजातान् यजमानायादित्यै रास्नास्यदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसाऽङ्गिरस्वत् । कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । तां पुत्रेभ्यः सम्प्र (४) अयच्छददितिः श्रपया निति—४ ) [ मित्रः करोत्वसि प्रचत्वारि च ] ॥ ५ ॥ वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्वत् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वदिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्विष्णुस्त्वा धूपयत्वङ्गिरस्वद्वरुणस्त्वा धूपयत्वङ्गिरस्वददितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत् खनत्ववटदेवानां त्वा पत्नीः(१)देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधतूखे धिषणास्त्वा देवीर्विश्व देव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीन्धतामुखेऽग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे वरूत्रयो जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत् पचन्तूखे । मित्रैतामुखां पचैषा मा भेदि । एतां ते परि ददाम्यभित्त्यै । अभीमाम् (२) महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम् । देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या । अपद्यमाना पृथिव्याशा दिश आ पृण । उत्तिष्ठ बृहती भवोर्ध्वातिष्ठ ध्रुवा त्वम् । वसवस्त्वाऽऽच्छृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्वत् रुद्रास्त्वाऽऽच्छृन्दन्तु त्रैष्टुभेन छन्दसाऽङ्गि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भ्रातृव्यो भवतीव खलु वा एष योऽग्निं चिनुते वज्र्यश्वः प्रतूर्वन्नेह्यवक्रामन्नशस्तीरित्याह वज्रेणैव पाप्मानं भ्रातृव्यमव क्रामति रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो रुद्रादेव (३) पशून्निर्याच्यात्मने कर्म कुरुते पूष्णा सयुजा सहेत्याह पूषा वा अध्वनाꣳसन्नेता समष्ट्यै पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ समभरन् पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीत्याह सायतनमेवैनं देवताभिः सम्भरत्यग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्याह येन (४) सङ्गच्छते वाजमेवास्य वृङ्क्ते प्रजापतये प्रतिप्रोच्याग्निः सम्भृत्य इत्याहुरियं वै प्रजापतिस्तस्या एतच्छ्रोत्रं यद्वल्मीकोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकवपामुप तिष्ठते साक्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ सम्भरत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इत्याह येन सङ्गच्छते वाजमेवास्य वृङ्क्तेऽन्वग्निरुषसामग्रं (५) अख्यदित्याहानुख्यात्या आगत्य वाज्यध्वन आक्रम्य वाजिन् पृथिवीमित्याहेच्छत्येवैनं पूर्वया विन्दत्युत्तरया द्वाभ्यामा क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्रजायन्ते द्यौस्ते पृष्ठं पृथिवी सधस्थमित्याहैभ्यो वा एतं लोकेभ्यः प्रजापतिः समैरयत् रूपमेवास्यैतन्महिमानं व्याचष्टे वज्री वै (६) एष यदश्वो दद्भिरन्यतोदद्भ्यो भूयाल्लोमभिरुभयादद्भ्यो यं द्विष्यात्तमधस्पदं ध्यायेद्वज्रेणैवैनꣳ स्तृणुते—१७) [आह पापीयानेव येनाग्रं वै सप्तदश च] ॥ २ ॥ उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्रजायन्तेऽप उप

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सृजति यत्र वा आप उपगच्छन्ति तदोषधयः प्रति तिष्ठन्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु
प्रति तिष्ठन्ति पशून् यज्ञो यज्ञं यजमानो यजमानं प्रजास्तस्मादप उप सृजति प्रतिष्ठित्यै यदध्वर्यु
रनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः (१) स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव
जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति जिघर्म्यग्निं मनसा घृतेनेत्याह मनसा हि
पुरुषो यज्ञमभिगच्छति प्रतिक्ष्यन्तं भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ्क्षेति पृथुं तिरश्चा वयसा
बृहन्तमित्याहाल्पो ह्येष जातो महान् (२) भवति व्यचिष्ठमन्नꣳ रभसं विदानमित्याहान्नमेवास्मै
स्वदयति सर्वमस्मै स्वदते य एवं वेदा त्वा जिघर्मि वचसा घृतेनेत्याह तस्माद्यत् पुरुषो मनसाभि
गच्छति तद्वाचा वदत्यरक्षसेत्याह रक्षसामपहत्यै मर्यश्रीः स्पृहयद्वर्णो अग्निरित्याहापचितिमे-
वास्मिन् दधात्यपचितिमान् भवति य एवम् (३) वेद मनसा त्वै तामाप्तुमर्हति यामध्व
र्युरनग्नावाहुतिं जुहोति मनस्वतीभ्यां जुहोत्याहुत्योराप्त्यै द्वाभ्यां प्रतिष्ठित्यै यज्ञमुखेयज्ञमुखे
वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येतर्हि खलु वा एतद्यज्ञमुखं यर्ह्येनदाहुतिरश्नुते परि
लिखति रक्षसामपहत्यै तिसृभिः परि लिखति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्माद्रक्षाꣳस्यप
हन्ति (४) गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनं परि गृह्णाति त्रिष्टुभा परि लिखती
न्द्रियं वै त्रिष्टुगिन्द्रियेणैवैनं परि गृह्णात्यनुष्टुभा परि लिखत्यनुष्टुप् सर्वाणि छन्दाꣳसि परिभूः पर्याप्त्यै
मध्यतोऽनुष्टुभा वाग्वा अनुष्टुब् तस्मान्मध्यतो वाचा वदामो गायत्रिया प्रथमया परि लि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



खत्यथानुष्टुभाथ त्रिष्टुभा तेजो वै गायत्री (५) यज्ञोऽनुष्टुगिन्द्रियं त्रिष्टुप् तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परि गृह्णाति—१३) [ अध्वर्युर्महानेवꣳहन्ति गायत्री त्रयोदश च ]॥ ३ ॥

देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या अथो धूममेवैतेन जनयति ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति सोऽग्निर्जातः प्रजाः शुचार्पयत् तं देवा अर्धर्चेनाशमय ञ्छिवं प्रजाभ्योऽहिꣳसन्तमित्याह प्रजाभ्य एवैनꣳशमयति द्वाभ्यां खनति प्रतिष्ठित्या अपां पृष्ठमसीति पुष्करपर्णमा (१) हरत्यपां वा एतत् पृष्ठं यत् पुष्करपर्णꣳ रूपेणैवैनदा हरति पुष्करपर्णेन सम्भरति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निꣳ सम्भरति कृष्णाजिनेन सम्भरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सम्भरति यद् ग्राम्याणां पशूनां चर्मणा सम्भरेद् ग्राम्यान् पशूञ्छुचार्पयेत् कृष्णाजिनेन सम्भरत्यारण्यानेव पशून् (२) शुचार्पयति तस्मात् समावत् पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृता लोमतः सम्भरत्यतो ह्यस्य मेध्यं कृष्णाजिनश्च पुष्करपर्णश्च सꣳस्तृणातीयं वै कृष्णाजिनमसौ पुष्करपर्णमाभ्यामेवैनमुभयतः परि गृह्णात्यग्निर्देवेभ्यो निलायत तमथर्वान्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इति (३) आह य एवैनमन्वपश्यत् तेनैवैनꣳ सम्भरति त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविन्दत्तमु त्वा दध्यङ्ङृषिरित्याह दध्यङ् वा आथर्वणस्तेजस्व्यासीत् तेज एवास्मिन् दधाति तमु त्वा पाथ्यो वृषेत्याह पूर्वमेवोदितमुत्तरेणाभि गृणाति (४) चतसृभिः सम्भरति चत्वारि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



छन्दाꣳसि छन्दोभिरेव गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य त्रैष्टुभो हि राजन्यो यं कामयेत वसीयान्त्स्यादित्युभयीभिस्तस्य सम्भरेत् तेजश्चैवास्मा इन्द्रियं च समीची दधात्यष्टाभिः सम्भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तꣳ सम्भरति सीद होतरिति (५) आह देवता एवास्मैसꣳ सादयति नि होतेति मनुष्यान्त्सꣳ सीदस्वेति वयाꣳसि जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवास्मै सꣳसन्नान् प्र जनयति—२७)
[आ पशूनिति गृणातीति सप्तविꣳशतिश्च] ॥ ४ ॥ क्रूरमिव वा अस्या एतत् करोति यत् खनत्यप उपसृजत्यापो वै शान्ताः शान्ताभिरेवास्यै शुचꣳ शमयति सन्ते वायुर्मातरिश्वा दधात्वित्याह प्राणो वै वायुः प्राणेनैवास्यै प्राणꣳ सन्दधाति सन्ते वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्त्ते तस्मै च देवि वषडस्तु (१) तुभ्यमित्याह षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मात् सर्वानृतून् वर्षति यद्वषट्कुर्याद्यातयामास्य वषट्कारः स्याद्यन्न वषट्कुर्याद् रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति सुजातो ज्योतिषा सहेत्यनुष्टुभो प नह्यत्यनुष्टुप् (२) सर्वाणि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनं तनुवा परि दधाति वेदुको वासो भवति य एवं वेद वारुणो वा अग्निरुपनद्ध उदु तिष्ठ स्वध्वरोर्ध्वऊ षु ण ऊतय इति सावित्रीभ्यामुत्तिष्ठति सवितृप्रसूत एवास्योर्ध्वां वरुणमेनिमुत्सृजति द्वाभ्यां प्रतिष्ठित्यै स जातो गर्भो असि (३) रोदस्यो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रित्याह मे वै रोदसी तयोरेष गर्भो यदग्निस्तस्मादेवमाहाग्ने चारुर्विभृत ओषधीष्वि-
त्याह यदा ह्येतं वि भरन्त्यथ चारुतरो भवति प्र मातृभ्यो अधि कनिक्रदद्गा इत्याहौ
षधयो वा अस्य मातरस्ताभ्य एवैनं प्र च्यावयति स्थिरो भव वीड्वङ्ग इति गर्दभ
आ सादयति ( ४ ) सन्नह्यत्येवैनमेतया स्थेम्ने गर्दभेन सं भरति तस्मात् गर्दभः पशूनां भार-
भारितमो गर्दभेन सं भरति तस्माद्गर्दभोऽप्यनालेशेऽत्यन्यान् पशून् मेद्यत्यन्नꣳ ह्येनेनार्कꣳ
सं भरन्ति गर्दभेन सं भरति तस्माद् गर्दभो द्विरेताः सन् कनिष्ठं पशूनां प्रजायतेऽग्निर्ह्यस्य
योनिं निर्दहति प्रजासु वा एष एतर्ह्यारूढः ( ५ ) स ईश्वरः प्रजाः शुचा प्रदहः शिवो भव
प्रजाभ्य इत्याह प्रजाभ्य एवैनꣳ शमयति मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजा
मा द्यावापृथिवी अभि शूशुचो मा न्तरिक्षं मा वनस्पतीनित्याहै भ्य एवैनं लोकेभ्यः
शमयति प्रैतु वाजी कनिक्रददित्याह वाजी ह्येष नानदद्रासभः पत्वेति ( ६ ) आह रासभ इति
ह्येतमृषयोऽवदन् भरन्नग्निं पुरीष्यमित्याहाग्निꣳ ह्येष भरति मा पाद्यायुषः पुरेत्याहा
युरेवास्मिन् दधाति तस्माद्गर्दभः सर्वमायुरेति तस्माद्गर्दभे पुरा युषः प्रमीते बिभ्यति
वृषाग्निं वृषणं भरन्नित्याह वृषा ह्येष वृषाग्निरपां गर्भम् ( ७ ) समुद्रियमित्याहापाꣳ
ह्येष गर्भो यदग्निरग्न आ याहि वीतय इति वा इमौ लोकौ व्यैतामग्न आ याहि वि-
तय इति यदाहानयोर्लोकयोर्वीत्यै प्रच्युतो वा एष आयतनादगतः प्रतिष्ठाꣳ स एतर्ह्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ध्वर्युश्च यजमानश्चध्यायत्यृतꣳसत्यमित्याहेयंवाऋतमसौ ( ८ ) सत्यमनयोरेवैनं प्रतिष्ठापयति नार्तिमार्च्छत्यध्वर्युर्न यजमानोवरुणोवा एष यजमानमभ्यैति यदग्निरुपनद्ध ओषधयः प्रति गृह्णीताग्निमेतमित्याह शान्त्यै व्यस्यन् विश्वा अमतीरराती्रित्याह रक्षसामपहत्यै निषीदन् नो अप दुर्मतिꣳ हनदित्याह प्रतिष्ठित्या ओषधयः प्रति मोदध्वम् ( ९ ) एनमित्याहौषधयो वा अग्नेर्भागधेयं ताभिरेवैनꣳ समर्धयति पुष्पावतीः सुपिप्पला इत्याह तस्मादोषधयः फलं गृह्णन्त्ययं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासददित्याह याभ्यएवैनं प्र च्यावयति तास्वेवैनं प्रतिष्ठापयति द्वाभ्यामुपावहरति प्रतिष्ठित्यै—१२ ) [ अस्त्वनुष्टुबसि सादयत्यारूढइतिगर्भ मसौ मोदध्वंद्विचत्वारिꣳशच्च ] ॥ ५ ॥ वारुणोवा अग्निरुपनद्धोवि पाजसेति वि स्रꣳसयति सवितृप्रसूत एवास्य विषूचीं वरुणमेनिं विसृजत्यप उपसृजत्यापोवै शान्ताः शान्ताभिरेवास्य शुचꣳशमयति तिसृभिरुपसृजति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचꣳशमयति मित्रः सꣳसृज्य पृथिवीमित्याह मित्रो वै शिवो देवानां तेनैव ( १ ) एनꣳसꣳ सृजति शान्त्यै यद्ग्राम्याणां पात्राणां कपालैः सꣳसृजेद्ग्राम्याणि पात्राणि शुचार्पयेदर्मकपालैः सꣳसृजत्येतानि वा अनुपजीवनीयानि तान्येव शुचार्पयति शर्कराभिः सꣳसृजति धृत्या अथो शन्त्वायाजलोमैः सꣳसृजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रिययैवैनं तनुवा सꣳसृजत्यथो तेजसा कृष्णाजिनस्य लोमभिः सम्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



( २ ) सृजति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सꣳसृजति रुद्राः सम्भृत्य पृथिवीमित्याहैता वा एतं देवता अग्रे समभरन् ताभिरेवैनꣳ सम्भरति मखस्य शिरोऽसीत्याह यज्ञो वै मखस्तस्यैतच्छिरो यदुखा तस्मादेवमाह यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते ( ३ ) पदे अथो प्रतिष्ठित्यै प्रान्यामियच्छत्यन्वन्यैमन्त्रयते मिथुनत्वाय त्र्युद्धिं करोति त्रय इमे लोका एषां लोकानामाप्त्यै छन्दोभिः करोति वीर्यं वै छन्दाꣳसि वीर्येणैवैनां करोति यजुषा बिलं करोति व्यावृत्त्या इयतीं करोति प्रजापतिना यज्ञमुखेन सम्मितां द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुस्तनां करोति पशूनां दोहायाऽष्टास्तनां करोति छन्दसां दोहाय नवाश्रिमभिचरतः ( ४ ) कुर्यात्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्यै कृत्वाय सा महीमुखामिति नि दधाति देवतास्वेवैनां प्रतिष्ठापयति—२१ ) [ एवसमेतेअभिचरत एकविꣳशतिश्च ॥ ६ ॥ सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाः शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान् दधाति तस्मात् सप्त शीर्षन् प्राणा अश्वशकेन धूपयति प्राजापत्यो वा अश्वः सयोनित्वायादितिस्त्वेत्याहेयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरङ्काराय न हि स्वः स्वꣳ हिनस्ति देवानां त्वा पत्नीरित्याह देवानाम् ( १ ) वा एतां पत्नयोऽग्रेऽकुर्वन्ताभिरेवैनां दधाति धिषणास्त्वेत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्धे ग्नास्त्वेत्याह छन्दाꣳसि वै ग्नाश्छन्दोभिरेवैनाꣳ श्रपयति वरूत्रयस्त्वेत्याह होत्रा वै वरूत्रयो होत्राभिरेवैनां पचति जनयस्त्वेत्याह देवानां वै पत्नीः ( २ )

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जनयन्त्वाभिरेवैनां पचति षड्भिः पचति षड्वा ऋतव ऋतुभिरेवैनां पचति द्विः पचन्त्वित्याह तस्मा द्विः संवत्सरस्य सस्यं पच्यते वारुण्युखाभीद्धा मैत्रियोपैति शान्त्यै, देवस्त्वा सवितोद्वपत्वित्याह सवितृप्रसूत एवैनां ब्रह्मणा देवताभिरुद्वपत्यपद्यमाना पृथिव्याशा दिश आ पृण ( ३ ) इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भात्युत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्या असुर्यं पात्रमनाच्छृण्णमाच्छृणत्ति देवत्राकरजक्षीरेणाच्छृणत्ति परमं वा एतत्पयो यदजक्षीरं परमे- णैवैनां पयसाऽऽच्छृणत्ति यजुषा व्यावृत्त्यै छन्दोभिरा च्छृणत्ति छन्दोभिर्वा एषा ( ४ ) क्रियते छन्दोभिरेव छन्दांस्यस्या च्छृणत्ति—६ ) [ देवानां पत्नीः पृणैषा षट्च ] ॥ ७ ॥

एकविंशत्या माषैः पुरुषशीर्षमच्छैत्यमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्यैरेवास्या मेध्यं निरव- दाय मेध्यं कृत्वाऽऽहरत्येकविंशतिर्भवन्त्येकविंशो वै पुरुषः पुरुषस्याप्त्यै व्यृद्धं वा एतत् प्राणैरमेध्यं यत् पुरुषशीर्षं सप्तधा वितृण्णां वल्मीकवपां प्रति नि दधाति सप्त वै शीर्षण्याः प्राणाः प्राणैरेवैनत् समर्धयति मेध्यत्वाय यावन्तः ( १ ) वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय यमगाथाभिः परि गायति यमादेवैनद्वृङ्क्ते तिसृभिः परि गायति त्रय इमे लोका एभ्य एवैनल्लोकेभ्यो वृङ्क्ते तस्माद्गायते न देयं गाथा हि तद्वृङ्क्तेऽग्निभ्यः पशूनालभते कामा वा अग्नयः कामानेवाव रुन्धे यत् पशून्नालभेतानवरुद्धा अस्य ( २ ) पशवः स्युर्यत् पर्य- ग्निकृतानुत्सृजेद्यज्ञवेशसं कुर्याद्यत् संस्थापयेद्यातयामानि शीर्षाणि स्युर्यत् पशूनालभते नैव

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पशूनवं रुन्धे यत् पर्यंग्निकृतानुत्सृजति शीर्ष्णोमयातयामत्वाय प्राजापत्येन सꣳ स्थापयति यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रतिष्ठापयति प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता आप्रीरपश्यत्ताभिर्वै स मुखतः ( ३ ) आत्मानमा प्रीणीत यदेता आप्रियो भवन्तियज्ञो वै प्रजापतिर्यज्ञमेवैताभिर्मुखत आप्रीणात्यपरिमितछन्दसोभवन्त्यपरिमितः प्रजापतिः प्रजापतेराप्त्यां ऊनातिरिक्ता मिथुनाः प्रजात्यै लोमशं वै नामैतच्छन्दः प्रजापतेः पशवो लोमशाः पशूनेवावं रुन्धे सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्यें क्रियन्ते तस्मादेता अग्नेश्चित्यस्य ( ४ ) भवन्त्येकंविꣳशतिꣳ सामिधेनीरन्वाह रुग्वा एकविꣳशो रुचमेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठाह्येकविꣳशश्चतुर्विꣳशतिमन्वाह चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमवं रुन्धे पराचीरन्वाह पराङिव हि सुवर्गो लोकः समास्त्वाग्न ऋतवो वर्धयन्त्वित्याह समाभिरेवाग्निं वर्धयति ( ५ ) ऋतुभिः संवत्सरं विश्वा आ भाहि प्रदिशः पृथिव्या इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भाति प्रत्यौहतामश्विना मृत्युमस्मादित्याह मृत्युमेवास्मादपं नुदत्युद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादपं हन्त्यगन्म ज्योतिरुत्तममित्याहासौ वा आदित्यः ( ६ ) ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति न संवत्सरस्तिष्ठति नास्य श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्योतिष्मतीमुत्तमामन्वाह ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्यै — २८ ) [ यावन्तोस्यमुखतश्चित्यस्य वर्धयत्यादित्यो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ष्टाविंशतिश्च ] ॥ ८ ॥ षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयति सप्त-
भिर्दीक्षयति सप्त छन्दांꣳसि छन्दोभिरेवैनं दीक्षयति विश्वे देवस्य नेतुरित्यनुष्टुभोत्तमया
जुहोति वाग्वा अनुष्टुप् तस्मात् प्राणानां वागुत्तमैकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्य
द्वाचोऽनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः ( १ ) प्रजा-
पतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै यदर्चिषि
प्रवृञ्ज्याद्भूतमव रुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्र वृणक्ति भविष्यदेवाव रुन्धे भविष्यद्धि
भूयो भूताद्द्वाभ्यां प्र वृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मणा वा एषा यजुषा सम्भृता
यदुखा सा यद्भिद्येतार्तिमार्च्छेत् ( २ ) यजमानो हन्येतास्य यज्ञो मित्रैतामुखान्तपेत्याह
ब्रह्म वै मित्रो ब्रह्मन्नेवैनां प्रतिष्ठापयति नार्तिमार्च्छति यजमानो नास्य यज्ञो हन्यते
यदि भिद्येत तैरेव कपालैः सꣳसृजेत् सैव ततः प्रायश्चित्तिर्यो गतश्रीः स्यान्मथित्वा तस्या
व दध्याद्भूतो वा एष स स्वाम् ( ३ ) देवतामुपैति यो भूतिकामः स्याद्य उखायै स-
म्भवेत् स एव तस्य स्यादतो ह्येष सम्भवत्येष वै स्वयम्भूर्नाम भवत्येव यं कामयेत भ्रा-
तृव्यमस्मै जनयेयमित्यन्यतस्तस्याहृत्याव दध्यात् साक्षादेवास्मै भ्रातृव्यं जनयत्यम्बरी-
षादन्नकामस्याव दध्यादम्बरीषे वा अन्नं भ्रियते सयोन्येवान्नम् ( ४ ) अव रुन्धे
मुञ्जानव दधात्यूर्ग्वै मुञ्जा ऊर्जमेवास्मा अपि दधात्यग्निर्देवेभ्यो निलायत स क्रुमुकं प्रावि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शत् कुमुकमवं दधाति यदेवास्य तत्र न्यक्तं तदेवावं रुन्धं आज्येन सं यौत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा ( ५ ) वैकङ्कतीमा दधाति भा एवावं रुन्धे शमीमयीमा दधाति शान्त्यै सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुपं तिष्ठते त्रयं इमे लोका एष्वेव लोकेष्वाविदं गच्छत्यथो प्राणानेवात्मन् धंत्ते—३४ ) प्रजापंतिर्कच्छेतुस्वामेवान्नंतेजंसाचतुंस्त्रिःशच्च ] ॥ ९ ॥ न ह स्म वै पुराग्निरपं रशुवृक्णं दहति तदंस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने यानि कानि चेति समिधमा दधात्य- परशुवृक्णमेवास्मैं स्वदयति सर्वंमस्मै स्वदते य एवं वेदौदुंम्बरीमा दधात्यूर्ग्वा उदु- म्बर ऊर्जमेवास्मा अपिदधाति प्रजापंतिरग्निमसृजत तः सृष्टः रक्षांःसि ( १ ) अजि- घाः सन्तस एतद्रांक्षोघ्नमंपश्यत्तेन वै स रक्षाःस्यपाहत यद्रांक्षोघ्नं भवंत्यग्नेरेव तेनं जा- ताद्रक्षाःस्यपंहन्त्याश्वत्थीमादधात्यश्वत्थो वै वनस्पतीनाःसपत्नसाहो विजित्यै वैकङ्कतीमा दधाति भा एवावं रुन्धे शमीमयीमा दधाति शान्त्यै सःशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे औदुंम्बरी ( २ ) वाचयति ब्रह्मणैव क्षत्रः सःश्यति क्षत्रेण ब्रह्म तस्मा- द्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं तस्माद्राजन्यो ब्राह्मणवानत्यन्यः राजन्यं मृत्युर्वा एष यद- ग्निरमृतः हिरंण्यः रुक्ममन्तरं प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्धत्त एकविःशतिनिर्बाधो भवत्ये- कविःशतिर्वै देवलोका द्वादश मासाः पञ्चर्तवस्त्रयं इमे लोका असावादित्यः ( ३ ) एकविःश

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्यमन्तरेति निर्बाधैर्वै देवा असुरान्निर्बाधेऽकुर्वत तन्निर्बाधानां निर्बाधत्वं निर्बाधी भवति भ्रातृव्यानेव निर्बाधे कुरुते सावित्रिया प्रति मुञ्चते प्रसूत्यै नक्तोषासेत्युत्तरयाहोरात्राभ्यामेवैनमुद्यच्छते देवा अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा अहोरात्राभ्यामेवैनमुद्यत्य ( ४ ) प्राणैर्दाधारासीनः प्रति मुञ्चते तस्मादासीनाः प्रजाः प्र जायन्ते कृष्णाजिनमुत्तरं तेजो वै हिरण्यं ब्रह्म कृष्णाजिनं तेजसा चैवैनं ब्रह्मणा चोभयतः परि गृह्णाति षडुद्यामꣳ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते यद्द्वादशोद्यामꣳ संवत्सरेणैव मौञ्जं भवत्यूर्ग्वै मुञ्जा ऊर्जैवैनꣳ सम् ( ५ ) अर्धयति सुपर्णोऽसि गरुत्मानित्यवेक्षते रूपमेवास्यै तन्महिमानं व्याचष्टे दिवं गच्छ सुवः पतेत्याह सुवर्गमेवैनं लोकं गमयति—२४ )

[ रक्षाꣳस्यौदुम्बरीआदित्यउद्यत्यसंचतुर्विꣳशतिश्च ] ॥ ३० ॥ समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः । वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् । घृतेनाञ्जन्त्सं पथो देवयानान् प्रजानन्वाज्यप्येतु देवान् । अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि । ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते । अग्निष्ट्वा ( १ ) देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः । स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् । देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु । एता उ वः सुभगा विश्वरूपा विपक्षोभिः श्रयमाणा उदातैः । ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सुमायुणा भवन्तु । अन्तरा मित्रावरुणा चरन्ती मुखं युज्ञानांमभि संविदाने । उपासा वाम् ( २ ) सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि । प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा । अपिप्रयं चोदना वां मिमाना होताराज्योतिः प्रदिशा दिशन्ता । आदित्यैर्नोभारतीवष्टुयज्ञꣳसरस्वतीसहरुद्रैर्नआवीत् । इडोपहूता वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त । त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः ( ३ ) । त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः । अश्वो घृतेन त्मन्या समक्त उप देवाꣳ ऋतुशः पाथ एतु । वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानिवक्षत् । प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने । स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः—४२ ) [ त्वा वामश्वो द्विचत्वारिꣳशच्च ] ॥ ११ ॥

सावित्राणि ( २२७ ) व्यृद्ध ( ३१७ ) मु ( २६३ ) देवस्य ( २७७ ) कूरं ( ४१२ ) वारुणः ( २२१ ) सप्तभि ( २०६ ) रेकविꣳशत्या ( ३२८ ) षड्भि ( २८४ ) नै ( २७४ ) समिद्ध ( १९२ ) एकादश ( ३०८१ ) ॥ ११ ॥ इति तैत्तिरीयसंहितायां पंचमे काण्डे प्रथमः प्रपाठकः ॥

ॐम् विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति विष्णोः क्रमोऽस्यभिमाति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान् यथापूर्वमभि जयति प्रजापतिरग्निमसृजत सोऽस्मात् सृष्टः ( १ ) पराङैत्तमेतयाऽन्वैदक्रन्ददिति तया वै सोऽग्नेः प्रियं धामावारुन्ध यदेतामन्वाहाग्नेरेवैतया प्रियं धामाव रुन्ध ईश्वरो वा एष पराङ् प्रदघो यो विष्णुक्रमान्क्रमते चतसृभिरावर्त्तते चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रियामेवास्य तनुवमभि ( २ ) पर्यावर्त्तते दक्षिणा पर्यावर्त्तते स्वमेव वीर्यमनु पर्यावर्त्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्त्तते शुनःशेपमाजीगर्त्ति वरुणोऽगृह्णात् स एतां वारुणीमपश्यत्तया वै स आत्मानं वरुणपाशादमुञ्चद्वरुणो वा एतं गृह्णाति य उखां प्रतिमुञ्चत उदुत्तमं वरुणपाशमस्मदित्याहात्मानमेवैतया ( ३ ) वरुणपाशान्मुञ्चत्या त्वाऽहार्षमित्याहा ह्येनꣳ हरति ध्रुवस्तिष्ठाविचाचलिरित्याह प्रतिष्ठित्यै विशस्त्वा सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ समर्धयत्यस्मिन् राष्ट्रमधि श्रयेत्याह राष्ट्रमेवास्मिन् ध्रुवमकर्यं कामयेत राष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्राष्ट्रमेव भवति ( ४ ) अग्ने बृहन्नुषसा मूर्ध्वो अस्थादित्याहाग्रमेवैनꣳ समानानां करोति निर्जग्मिवान्तमस इत्याह तम एवास्मादपहन्ति ज्योतिषाऽऽ गादित्याह ज्योतिरेवास्मिन्दधाति चतसृभिः सादयति चत्वारि छन्दाꣳसि छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति सद्वती ( ५ ) भवति सत्त्वमेवैनं गमयति वात्सप्रेणोप तिष्ठत एतेन वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धामावारुन्धाग्नेरेवैतेन प्रियं धामाव रुन्ध एकादशं भवत्येकधैव यजमाने वीर्यं दधाति स्तोमेन वै देवा अस्मिँल्लोक आर्ध्नुवन् छन्दोभिरमुष्मिन्त्स्तोमस्येव खलु वा एतद्रूपं यद्वात्सप्रं यद्वात्सप्रेणोपतिष्ठते (६) इममेव तेन लोकमभि जयति यद्विष्णुक्रमान् क्रमतेऽमुमेव तैर्लोकमभि जयति पूर्वेद्युः प्र क्रामत्युत्तरेद्युरुप तिष्ठते तस्माद्योगेऽन्यासां प्रजानां मनः क्षेमेऽन्यासां तस्माद्यायावरः क्षेम्यस्येशे तस्माद्यायायावरः क्षेम्यमध्यवस्यति मुष्टीकरोति वाचं यच्छति यज्ञस्य धृत्यै—४२) [सृष्टो१भ्यैतयाभवति सद्वत्युपतिष्ठते द्विचत्वारिंशच्च] ॥ १ ॥

अन्नपतेऽन्नस्य नो देहीत्याहाग्निर्वा अन्नपतिः स एवास्मा अन्नं प्र यच्छत्यनमीवस्य शुष्मिण इत्याहायक्ष्मस्येति वावैतदाह प्र प्रं दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याहाशिषमेवैतामाशास्त उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः (१) प्राणैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्द्धयति चतसृभिरा सादयति चत्वारि छन्दाꣳसि छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एषा च्छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति सद्वती भवति सत्त्वमेवैनं गमयति प्रेदग्ने ज्योतिष्मान् (२) याहीत्याह ज्योतिरेवास्मिन् दधाति तनुवा वा एष हिनस्ति यꣳ हिनस्ति मा हिꣳसीस्तनुवा प्रजा इत्याह प्रजाभ्य एवैनꣳ शमयति रक्षाꣳसि वा एतद्यज्ञꣳ सचन्ते यदन

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उत्सर्जत्यर्कन्दुदित्यन्वाह रक्षसामपहत्या अनसा वहन्त्यपचितिमेवास्मिन्दधाति तस्मादनस्वी च रथी चातिथीनामपचिततमौ ( ३ ) अपचितिमान् भवति य एवं वेद समिधाऽग्निं दुवस्यतेति घृतानुषिक्तामवसिते समिधमा दधाति यथाऽतिथय आगताय सर्पिष्वदातिथ्यं क्रियते तादृगेव तद्गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्योऽप्सु भस्म प्र वेशयत्यप्सुयोनिर्वा अग्निः स्वामेवैनं योनिं गमयति तिसृभिः प्र वेशयति त्रिवृद्वै ( ४ ) अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति परा वा एषोऽग्निं वपति योऽप्सु भस्म प्रवेशयति ज्योतिष्मतीभ्यामव दधाति ज्योतिरेवास्मिन् दधाति द्वाभ्यां प्रतिष्ठित्यै परा वा एष प्रजां पशून् वपति योऽप्सु भस्म प्रवेशयति पुनरूर्जा सह रय्येति पुनरुदैति प्रजामेव पशूनात्मन् धत्ते पुनस्त्वादित्याः ( ५ ) रुद्रा वसवः समिन्धतामित्याहैता वा एतं देवता अग्रे समैन्धत ताभिरेवैनꣳ समिन्धे बोधा स बोधीत्युप तिष्ठते बोधयत्येवैनं तस्मात् सुप्त्वा प्रजाः प्रबुध्यन्ते यथास्थानमुप तिष्ठते तस्माद्यथास्थानं पशवः पुनरेत्योपतिष्ठन्ते—४२ ) [ देवा ज्योतिष्मानपचिततमौ वा आदित्याद्विचत्वारिꣳशच्च ] ॥ २ ॥ यावती वै पृथिवी तस्यै यम आधिपत्यं परीयाय यो वै यमं देवयजनमस्या अनिर्याच्याग्निं चिनुते यमायनꣳ स चिनुत एतेत्यध्यवसाययति यममेव देवयजनमस्यै निर्याच्यात्मनेऽग्निं चिनुत इष्वग्रेण वा अस्या अनामृतमिच्छन्तो नाविन्दन्ते देवा एतद्यजुरपश्यन्नपे ते ति यदेतेनाध्यवसाययति ( १ ) अनामृत एवाग्निं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चिनुत उद्धन्ति यदेवास्या अमेध्यं तदप हन्त्यपोऽवोक्षति शान्त्यै सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमव रुन्ध ऊषान् नि वपति पुष्टिर्वा एषा प्रजननं यदूषाः पुष्ट्यामेव प्रजननेऽग्निं चिनुतेऽथो संज्ञान एव संज्ञानꣳ ह्येतत् ( २ ) पशूनां यदूषा द्यावापृथिवी सहास्तां ते वि यती अब्रूतामस्त्वेव नौ सह यज्ञियमिति यदमुष्या यज्ञियमासीत्तदस्यामदधात्त ऊषा अभवन्यदस्या यज्ञियमासीत्तदमुष्यामदधात्तददश्चन्द्रमसि कृष्णमूषान्निवपन्नदो ध्यायेद्यावापृथिव्योरेव यज्ञियेऽग्निं चिनुतेऽयꣳ सो अग्निरिति विश्वामित्रस्य ( ३ ) सूक्तं भवत्येतेन वै विश्वामित्रोऽग्नेः प्रियं धामावारुन्धाग्नेरेवैतेन प्रियं धामाव रुन्धे छन्दोभिर्वै देवाः सुवर्गं लोकमायन् चतस्रः प्राचीरुप दधाति चत्वारि छन्दाꣳसि छन्दोभिरेव तद्यजमानः सुवर्गं लोकमेति तेषाꣳ सुवर्गं लोकं यतां दिशः समव्लीयन्त ते द्वे पुरस्तात् समीची उपादधत द्वे ( ४ ) पश्चात् समीची ताभिर्वै ते दिशोऽदृꣳहन्यद्द्वे पुरस्तात् समीची उपदधाति द्वे पश्चात् समीची दिशां विधृत्या अथो पशवो वै छन्दाꣳसि पशूनेवास्मै समीचो दधात्यष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टावुप दधात्यष्टाक्षरा गायत्री गायत्री सुवर्गं लोकमञ्जसा वेद सुवर्गस्य लोकस्य ( ५ ) प्रज्ञात्यै त्रयोदश लोकंपृणा उप दधात्येकविꣳशतिः सम्पद्यन्ते प्रतिष्ठा वा एकविꣳशः प्रतिष्ठा गार्हपत्य एकविꣳशस्यैव प्रतिष्ठां गार्हपत्यमनु प्रति तिष्ठति प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद पञ्च चितीकं चिन्वीत प्रथमं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चिन्वानः पांक्तो यज्ञः पांक्ताः पशवो यज्ञमेव पशूनव रुन्धे त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेषु (६) प्रति तिष्ठत्येकचितीकं चिन्वीत तृतीयं चिन्वान एकधा वै सुवर्गो लोक एकवृतैव सुवर्गं लोकमेति पुरीषेणाभ्यूहति तस्मान्माꣳसेनास्थि छन्नं न दुश्चर्मा भवति य एवं वेद पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठति — ४७) [अध्यवसाययत्येतद्विश्वामित्रस्य द्वे लोकस्य लोकेषु सप्तचत्वारिꣳशच्च ] ॥ ३ ॥ वि वा एतौ द्विषाते यश्च पुराग्निर्यश्चोखायाꣳ समितमिति चतसृभिः सन्नि वपति चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनौ तनुवा सꣳशास्ति समितमित्याह तस्मात् ब्रह्मणा क्षत्रꣳ समेति यत्सन्युप्य विहरति तस्माद्ब्रह्मणा क्षत्रं व्येत्यृतुभिः (१) वा एतं दीक्षयन्ति स ऋतुभिरेव विमुच्यो मातेव पुत्रंपृथिवी पुरीष्यमित्याहर्तुभिरेवैनं दीक्षयित्वर्तुभिर्वि मुञ्चति वैश्वानर्या शिक्यमा दत्ते स्वदयत्येवैनन्नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्का भवन्ति निर्ऋत्यै वा एतद्भागधेयं यत्तुषा निर्ऋत्यै रूपं कृष्णꣳ रूपेणैव निर्ऋतिं निरवदयत इमां दिशं यन्त्येषा (२) वै निर्ऋत्यै दिक् स्वायामेव दिशि निर्ऋतिं निरवदयते स्वकृत इरिण उप दधाति प्रदरे वैतद्वै निर्ऋत्या आयतनꣳ स्व एवायतने निर्ऋतिं निरवदयते शिक्यमभ्युपदधाति नैर्ऋतो वै पाशः साक्षादेवैनं निर्ऋतिपाशान्मुञ्चति तिस्र उप दधाति त्रेधाविहितो वै पुरुषो यावानेव पुरुषस्तस्मान्निर्ऋतिमव यजते पराचीरुप (३) दधाति पराचीमेवास्मा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation, Kolkata. Digitization: eGangotri.



न्निर्ऋतिं प्रणुदते ऽप्रतीक्षमायन्ति निर्ऋत्या अन्तर्हित्यै मार्जयित्वोप तिष्ठन्ते मेध्यत्वाय गार्हप त्यमुप तिष्ठन्ते निर्ऋतिलोक एव चरित्वा पूता देवलोकमुपावर्तन्त एकयोप तिष्ठन्त एकधैव यजमाने वीर्यं दधति निवेशनः सङ्गमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजयैवैनं पशुभिः समर्धयन्ति—४८) [ क्रतुभिरेषोपाष्टाचत्वारिंशच्च ] ॥ ४ ॥ पुरुषमात्रेण वि मिमीते यज्ञेन वै पुरुषः सम्मितो यज्ञपरुषैवैनं वि मिमीते यावान् पुरुष ऊर्ध्वबाहुस्तावान् भवत्येतावद्वै पुरुषे वीर्यं वीर्येणैवैनं वि मिमीते पक्षी भवति न ह्यपक्षः पतितुमर्हत्यरत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात् पक्षप्रवयाꣳसि वयाꣳसि व्याममात्रौ पक्षौ च पुच्छं च भवत्येतावद्वै पुरुषे वीर्यम् (१) वीर्यसम्मितो वेणुना वि मिमीत आग्नेयो वै वेणुः सयोनित्वाय यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै षड्गवेन कृषति षड्वा ऋतव ऋतुभिरेवैनं कृषति यद्द्वादशगवेन संवत्सरेणैवे यं वा अग्नेरतिदाहादबिभेत्सैतद्द्विगुणमपश्यत् कृष्टञ्चाकृष्टञ्च ततो वा इमां नात्यदहद्यत्कृष्टञ्चाकृष्टञ्च (२) भवत्यस्या अनतिदाहाय द्विगुणं त्वा अग्निमुद्यन्तुमर्हतीत्याहुर्यत् कृष्टञ्चाकृष्टञ्च भवत्यग्ने रुद्यत्या एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान् यत् प्राच उत्सृजेद्रुद्रायापिदध्याद्य द्दक्षिणा पितृभ्यो नि धुवेद्यत्प्रतीचो रक्षाꣳसि हन्युरुदीच उत्सृजत्येषा वै देवमनुष्याणाꣳ शान्ता दिक् (३) तामेवैनाननूत्सृजत्यथो खल्विमां दिशमुत्सृजत्यसौ वा आदित्यः प्राणः प्राणमेवैनाननूत्सृजति दक्षिणा पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते तस्माद्दक्षिणोऽर्ध आ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्मनो वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्त्तन्ते तस्मात् पराञ्चः पशवो वि तिष्ठन्ते प्रत्यञ्च आ वर्त्तन्ते तिस्रस्तिस्रः सीताः ( ४ ) कृषति त्रिवृतमेव यज्ञमुखे वि यातयत्योषधीर्वपति ब्रह्मणान्नमव रुन्धेऽर्केऽर्कश्चीयते चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयः सप्तारण्या उभयीषामवरुध्या अन्नस्यान्नस्य वपत्यन्नस्यान्नस्यावरुध्यै कृष्टे वपति कृष्टे ह्योषधयः प्रतितिष्ठन्त्यनुसीतं वपति प्रजात्यै द्वादशसु सीतासु वपति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नं पचति यदग्निचित् ( ५ ) अनवरुद्धस्याश्नीयादवरुद्धेन व्यृध्येत ये वनस्पतीनां फलग्रहयस्तानिध्मेऽपि प्रोक्षेदनवरुद्धस्या वरुध्यै दिग्भ्यो लोष्टानुत्समस्यति दिशामेव वीर्यमवरुध्य दिशां वीर्येऽग्निं चिनुते यं द्विष्याद्यत्र स स्यात् तस्यै दिशो लोष्टमाहरेदिषमूर्जमहमित आ दद इतीषमेवोर्जं तस्यै दिशोऽव ( ६ ) रुन्धे क्षोधुको भवति यस्तस्यां दिशि भवत्युत्तरवेदिमुप वपत्युत्तरवेद्याꣳ ह्यग्निश्चीयते थो पशवो वा उत्तरवेदिः पशूनेवाव रुन्धे थो यज्ञपरुषोऽनन्तरित्यै—२५ ) [ वीर्यं चदिक् सीता अग्निचिदव पञ्चविꣳशतिश्च ॥ ५ ॥

अग्नेतव श्रवो वय इति सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य सूक्तꣳ सूक्तेनैव वैश्वानरमव रुन्धे षड्भिर्नि वपति षड्वा ऋतवः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्धे समुद्रं वै नामैतच्छन्दः समुद्रमनु प्रजाः प्रजायन्ते यदेतेन सिकता निवपति प्रजानां

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रजननायेन्द्रः ( १ ) वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तः शरा अशीर्यन्त ताः शर्करा अभवन् तच्छर्कराणाꣳ शर्करत्वं वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभिरग्निं परिमिनोति वज्रेणैवास्मै पशून् परि गृह्णाति तस्माद्वज्रेण पशवः परिगृहीतास्तस्मात् स्थेयानस्थेयसो नोप हरते त्रिसप्ताभिः पशुकामस्य ( २ ) परि मिनुयात् सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवः प्राणैरेवास्मै पशूनव रुन्धे त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्या अपरिमिताभिः परि मिनुयादपरिमितस्यावरुध्यै यं कामयेतापशुः स्यादित्यपरिमित्य तस्य शर्कराः सिकता व्यूहेदपरिगृहीत एवास्य विषूचीनꣳ रेतः परा सिञ्चत्यपशुरेव भवति ( ३ ) यं कामयेत पशुमान्त्स्यादिति परिमित्य तस्य शर्कराः सिकता व्यूहेत्परिगृहीत एवास्मै समीचीनꣳ रेतः सिञ्चति पशुमानेव भवति सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः शंयुं बार्हस्पत्यं मेधो नोपानमत् सोऽग्निं प्राविशत् ( ४ ) सोऽग्नेः कृष्णो रूपं कृत्वोदायत सोऽश्वं प्राविशत्सोऽश्वस्यावान्तरशफोऽभवद्यदश्वमाक्रमयति य एव मेधोऽश्वं प्राविशत्तमेवाव रुन्धे प्रजापतिनाग्निश्चेतव्य इत्याहुः प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैवाग्निं चिनुते पुष्करपर्णमुप दधाति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिम् ( ५ ) एवाग्निं चिनुतेऽपां पृष्ठमसीत्युप दधात्यपां वा एतत् पृष्ठं यत् पुष्करपर्णꣳ रूपेणैवैनदुप दधाति—२० ) [ इन्द्रः पशुकामस्य भवत्यविशत् सयोनिं विꣳशतिश्च ॥ ६ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ब्रह्म जज्ञानमिति रुक्ममुप दधाति ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत् प्रजा यजमानः सृजते ब्रह्म जज्ञानमित्याह तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत्पृथिव्यां चिन्वीतपृथिवीꣳ शुचाऽर्पयेन्नौषधयो न वनस्पतयः ( १ ) प्र जायेरन् यदन्तरिक्षे चिन्वीतान्तरिक्षꣳ शुचार्पयेन्न वयाꣳसि प्र जायेरन् यद्दिवि चिन्वीत दिवꣳ शुचार्पयेत्न पर्जन्यो वर्षेद्रुक्ममुप दधात्यमृतं वै हिरण्यममृत एवाग्निं चिनुते प्रजात्यै हिरण्मयं पुरुषमुप दधाति यजमानलोकस्य विधृत्यै यदिष्टकाया आतृण्णमनूपदध्यात् पशूनाश्च यजमानस्य च प्राणमपि दध्याद्दक्षिणतः ( २ ) प्राञ्चमुप दधाति दाधार यजमानलोकं न पशूनाश्च यजमानस्य च प्राणमपि दधात्यथो खल्विष्टकाया आतृण्णमनूप दधाति प्राणानामुत्सृष्टयै द्रप्सश्चस्कन्देत्यभि मृशति होत्रास्वेवैनं प्रति ष्ठापयति स्रुचावुप दधात्याज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीमियं वै कार्ष्मर्यमय्यसावौदुम्बरी मे एवोप धत्ते ( ३ ) तूष्णीमुप दधाति न हीमे यजुषाप्तुमर्हति दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीं तस्मादस्या असावुत्तराज्यस्य पूर्णां कार्ष्मर्यमयीं वज्रो वा आज्यं वज्रः कार्ष्मर्यो वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति दध्नः पूर्णामौदुम्बरीं पशवो वै दध्यूर्गुदुम्बरः पशुष्वेवोर्जं दधाति पूर्णे उपदधाति पूर्ण एवैनम् (४) अमुष्मिँल्लोक उप तिष्ठते विराज्यग्निश्चेतव्य इत्याहुः स्रुग्वै विराड्यत्स्रुचावुपदधाति विराज्येवाग्निं चिनुते यज्ञमुखे यज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो यद्रुक्मं व्याघारयति यज्ञमुखादेव रक्षाꣳस्यपं हन्ति पञ्चभिर्व्याघारयति पांक्तो यज्ञो यावानेव यज्ञस्तस्माद्रक्षाꣳस्यपं हन्त्यक्ष्णया व्याघारयति तस्मादक्ष्णया ( ५ ) पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै—५) [ वनस्पतयोदक्षिणतो धत्त एनमक्ष्णया पञ्चचं ] ॥ ७ ॥ स्वयमातृण्णामुपं दधातीयं वै स्वयं मातृण्णेमामेवोपं धत्तेऽश्वमुपं घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते प्रथमेष्टकोपधीयमाना पशूनाश्च यजमानस्य च प्राणमपिं दधातिस्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्या अग्नावग्निश्चेतव्य इत्याहुरेषवै ( १ ) अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकां यजुष्कृतां प्रयच्छेत्तां ब्राह्मणश्चोपदध्याताम्ग्नावेव तदग्निं चिनुत ईश्वरो वा एष आर्तिमार्तोर्योऽविद्वानिष्टकामुप दधाति त्रीन् वरान् दद्यात् त्रयो वै प्राणाः प्राणानाꣳ स्पृत्यै द्वावेव देयौ द्वौ हि प्राणावेकं एव देय एको हि प्राणः पशुः ( २ ) वा एष यदग्निर्न खलु वै पशव आयवसे रमन्ते दूर्वेष्टकामुपं दधाति पशूनां धृत्यै द्वाभ्यां प्रतिष्ठित्यै काण्डात्काण्डात्प्ररोहन्तीत्याह काण्डेन काण्डेन ह्येषा प्रतितिष्ठत्येवा नो दूर्वे प्र तनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं देवा उपा दधताधरलक्ष्माणमसुरा यम् ( ३ ) कामयेत

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वसीयान्त्स्यादित्युत्तरंलक्ष्माणं तस्योप दध्याद्वसीयानेव भवति यं कामयेत पापीयान्त्स्यादि-
त्यधरंलक्ष्माणं तस्योप दध्यादसुरयोनिमेवैनमनु परा भावयति पापीयान् भवति त्र्यालिखिता
भवतीमे वै लोकास्त्र्यालिखितेभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेत्यङ्गिरसः सुवर्गं लोकं
यतः पुरोडाशः कूर्मो भूत्वाऽनु प्रासर्पत् ( ४ ) यत्कूर्ममुप दधाति यथा क्षेत्रविदञ्जसा नय
त्येवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति मेधो वा एष पशूनां यत्कूर्मो यत्कूर्ममुपदधाति
स्वमेव मेधं पश्यन्तः पशव उप तिष्ठन्ते श्मशानं वा एतत् क्रियते यन्मृतानां पशूनाꣳ शी-
र्षाण्युपधीयन्ते यज्जीवन्तं कूर्ममुपदधाति तेनाश्मशानचिद्वास्तव्यो वा एष यत् ( ५ ) कूर्मो
मधु वाता ऋतायत इति दध्ना मधुमिश्रेणाभ्यनक्ति स्वदयत्येवैनं ग्राम्यं वा एतदन्नं यद्द-
ध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुध्यै मही द्यौः पृथिवी च न इत्याहा
भ्यामेवैनमुभयतः परि गृह्णाति प्राञ्चमुप दधाति सुवर्गस्य लोकस्य समष्ट्यै पुरस्तात् प्रत्य-
ञ्चमुप दधाति तस्मात् ( ६ ) पुरस्तात् प्रत्यञ्चः पशवो मेधमुप तिष्ठन्ते यो वा अपनाभिमग्निं
चिनुते यजमानस्य नाभिमनु प्र विशति स एनमीश्वरो हिꣳसितोरुलूखलमुप दधात्येषा वा
अग्नेर्नाभिः सनाभिमेवाग्निं चिनुतेऽहिꣳसाया औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे मध्यत
उप दधाति मध्यत एवास्मा ऊर्जं दधाति तस्मात् ( ७ ) मध्यत ऊर्जा भुञ्जत इयद्भवति
प्रजापतिना यज्ञमुखेन सम्मितमव हन्त्यन्नमेवाकर्वैष्णव्यर्चोप दधाति विष्णुर्वै यज्ञो वैष्णवा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वनस्पतयो यज्ञ एव यज्ञं प्रति ष्ठापयति—२७) [ वैपशुर्यमसर्पद्यत्तस्मात्तस्मात्सप्त विंशतिश्च ] ॥ ८ ॥ एषां वा एतल्लोकानां ज्योतिः सम्भृतं यदुखा यदुखामुपदधात्येभ्य एव लोकेभ्यो ज्योतिरव रुन्धे मध्यत उप दधाति मध्यत एवास्मै ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरुपास्महे सिकताभिः पूरयत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमव रुन्धे यं कामयेत क्षोधुकः स्यादित्यूनां तस्योप (१) दध्यात् क्षोधुक एव भवति यं कामयेतानुपदस्यदन्नमद्यादिति पूर्णां तस्योप दध्यादनुपदस्यदेवान्नमत्तिसहस्रं वै प्रति पुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वायोखायामपि दधाति प्रतिष्ठामेवैनद्गमयति व्यृद्धं वा एतत्प्राणैरमेध्यं यत्पुरुषशीर्षममृतं खलु वै प्राणाः (२) अमृतꣳ हिरण्यं प्राणेषु हिरण्यशल्कान् प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैः समर्धयति दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति शृतातंक्येन मेध्यत्वाय ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेण पूरयत्युभयस्यावरुध्यै पशुशीर्षाण्युप दधाति पशवो वै पशुशीर्षाणि पशूनेवाव रुन्धे यं कामयेतापशुः स्यादिति (३) विषूचीनानि तस्योप दध्याद्विषूच एवास्मात् पशून् दधात्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति समीचीनानि तस्योप दध्यात् समीच एवास्मै पशून् दधाति पशुमानेव भवति पुरस्तात् प्रतीचीनमश्वस्योप दधाति पश्चात्प्राचीनमृषभस्यापशवो वा अन्ये गोअ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्वेभ्यः पशवो गोअश्वानेवास्मै समीचो दधात्येतावन्तो वै पशवः ( ४ ) द्विपादश्च चतुष्पादश्च तान् वा एतदग्नौ प्र दधाति यत्पशुशीर्षाण्युपदधात्यमुमारण्यमनु ते दिशामीत्याह ग्राम्येभ्य एव पशुभ्य आरण्यान्पशूञ्छुचमनूत्सृजति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृताः सर्पशीर्षमुपदधाति यैव सर्पे त्विषिस्तामेवाव रुन्धे ( ५ ) यत्समीचीनंपशुशीर्षैरु-पदध्याद्ग्राम्यान् पशून् दꣳशुकाः स्युर्यद्विषूचीनमारण्यान् यजुरेव वदेदव तां त्विषिꣳ रुन्धे या सर्पे न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खलूपधेयमेव यदुपदधाति तेन तां त्विषिमव रुन्धे या सर्पे यद्यजुर्वदति तेन शान्तम्—४४ ) [ उप प्राणा इति पशवो रुन्धे चतुश्चत्वारि-ꣳशच्च ] ॥ ९ ॥

पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्वि क्रियते यत्प्राचीन-मैष्टकाद्यजुः क्रियते रेतोऽपस्या अपस्या उप दधाति योनावेव रेतो दधाति पञ्चोप दधाति पाङ्क्ताः पशवः पशूनेवास्मै प्र जनयति पञ्च दक्षिणतो वज्रो वा अपस्या वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति पञ्च पश्चात् ( १ ) प्राचीरुप दधाति पश्चाद्वै प्राचीनꣳ रेतो धीयते पश्चादेवास्मै प्राचीनꣳ रेतो दधाति पञ्च पुरस्तात् प्रतीचीरुप दधाति पञ्च पश्चात् प्रा-चीस्तस्मात् प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते पञ्चोत्तरतश्छन्दस्याः पशवो वै छ-न्दस्याः पशूनेव प्रजातान्त्स्वमायतनमभि पर्यूहत इयं वा अग्नेरतिदाहादबिभेत्सैताः ( २ ) अपस्या अपश्यत् ता उपाधत्त ततो वा इमान्नात्यदहद्यदपस्या उपदधात्यस्या अनतिदा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ह्रायोवाच ह्येयमदुदित्स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना वेददिति प्राणभृत उप दधाति रेतस्येव प्राणान् दधाति तस्माद्वदन्प्राणन्पश्यञ्छृण्वन् पशुर्जायतेऽयं पुरः ( ३ ) भुव इति पुरस्तादुप दधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधारायं पश्चाद्विश्वव्यचा इति पश्चाचक्षुरेवैताभिर्दाधारेदमुत्तरात्सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधारेयमुपरिमतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार दश दशोप दधाति स वीर्यत्वायाक्ष्णया (४) उप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणा ताभिर्भरद्वाजो याः प्रतीचीस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या ऊर्ध्वास्ताभिर्विश्वकर्मा य एवमेतासामृद्धिं वेदर्ध्नोत्येव य आसामेवं बन्धुतां वेद बन्धुमान् भवति य आसामेवं क्लृप्तिं वेद कल्पते ( ५ ) अस्मै य आसामेवमायतनं वेदायतनवान् भवति य आसामेवं प्रतिष्ठां वेद प्रत्येव तिष्ठति प्राणभृत उपधाय संयत उप दधाति प्राणानेवास्मिन्धित्वा संयद्भिः सं यच्छति तत्संयताꣳ संयत्त्वमथो प्राण एवापानं दधाति तस्मा त्प्राणापानौ सं चरतो विषूचीरुप दधाति तस्माद्विष्वञ्चौ प्राणापानौ यद्वा अग्नेरसंयतम् ( ६ ) असुवर्ग्यमस्य तत्सुवर्ग्योऽग्निर्य त्संयत उप दधाति समेवैनं यच्छति सुवर्ग्यमेवाकस्त्र्यविर्वयः कृतमयानामित्याह वयोभिरेवायानव रुन्धे यैर्वयाꣳसि सर्वतो वायुमतीर्भवन्ति तस्मादयꣳ सर्वतः पवते — ३५ ) [पश्चादेताःपुरोक्ष्णयाकल्पतेऽसंयतं पञ्चत्रिंशच्च] ॥ १० ॥ गायत्री त्रिष्टुप् जगत्यनुष्टुक्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पंक्त्या सह। बृहत्युष्णिहा ककुत्सूचीभिःशिम्यन्तु त्वा। द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा। सछन्दा या च विच्छन्दाः सूचीभिःशिम्यन्तु त्वा। महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः। मेघ्या विद्युतो वाचः सूचीभिः शिम्यन्तु त्वा। रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः। अश्वस्य वाजिनस्त्वचि सूचीभिः शिम्यन्तु त्वा। नारीः (१) ते पत्नयो लोम वि चिन्वन्तु मनीषया। देवानां पत्नीर्दिशःसूचिभिः शिम्यन्तु त्वा। कुविदङ्ग यवमन्तो यवंचिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुत भोजनानि ये बर्हिषो नमो वृक्तिं न जग्मुः—३० ) [ नारीस्त्रिंशच्च ]॥ ११ ॥

कस्त्वा छ्यति कस्त्वा वि शास्ति कस्ते गात्राणि शिम्यति। क उं ते शमिता कविः। ऋतवस्त ऋतुधा परुः शमितारो वि शासतु। संवत्सरस्य धायसा शिमीभिः शिम्यन्तु त्वा। दैव्या अध्वर्यवस्त्वा छ्यन्तु वि च शासतु। गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः। अर्धमासाः परूंषि ते मासाश्छ्यन्तु शिम्यन्तः। अहोरात्राणि मरुतो विलिष्टम् ( १ ) सूदयन्तु ते। पृथिवी तेऽन्तरिक्षेण वायुश्छिद्रं भिषज्यतु। द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया। शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः। शमस्थभ्यो मज्जभ्यः शमु ते तनुवे भुवत्—३० [ विलिष्टं त्रिंशच्च ]॥ १२ ॥

विष्णुमुखा ( ३४२ ) अन्नपते ( २९२ ) यावती ( ३४७ ) वि ( १९८ ) पुरुषमात्रेणा ( ३२५ ) ग्ने ( २७० ) ब्रह्म ( २५५ ) स्वय ( ३७७ ) मेषां ( २९४ ) पशु ( ३३५ ) गायत्री ( ८० ) को ( ८० ) द्वादश ( ३१९५ )॥ १२ ॥ इति तैत्तिरीयसंहितायां पंचमकाण्डे द्वितीयः प्रपाठकः॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ओम् उत्सन्नयज्ञो वा एष यदग्निः किं वा ह्येतस्यं क्रियते किं वा न यद्वै यज्ञस्यं क्रियमाणस्यान्तर्यन्ति पूर्यति वा अस्य तदांश्विनीरुपं दधात्यश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मैं भेषजं करोति पञ्चोपं दधाति पाङ्क्तो यज्ञो यावांनेव यज्ञस्तस्मैं भेषजं करोत्यृतव्या उपं दधात्यृतूनां क्लृप्त्यै (१) पञ्चोपं दधाति पञ्च वा ऋतवो यावंन्त एवर्तवस्तानूकंल्पयति समानप्रभृतयो भवन्ति समानोदंर्कास्तस्मात् समाना ऋतव एकेन पदेन व्यावर्तन्ते तस्मांदृतवो व्यावर्तन्ते प्राणभृत उपंदधात्यृतुष्वेव प्राणान् दंधाति तस्मात् समानाः सन्तं ऋतवो न जीर्यन्त्यथो प्र जंनयत्येवैनानेष वै वायुर्यत् प्राणो यदृतव्यां उपधायं प्राणभृतः (२) उपदधांति तस्मात्सर्वांनृतूननुं वायुरा वंरीवर्ति वृष्टिसनीरुपं दधाति वृष्टिमेवावं रुन्धे यदेंकधोपंदध्यादेकंमृतुं वर्षेदनुपरिहारंऽ सादयति तस्मात्सर्वांनृतून्वर्षति यत्प्राणभृतं उपधायं वृष्टिसनीरुपदधांति तस्मांद्वायुप्रच्युता दिवो वृष्टिरीर्तें पशवो वै वयस्यां नानांमनसः खलु वै पशवो नानांव्रतास्तेऽप एवाभि समनसः (३) यद्कामयेतापशुः स्यादिति वयस्यांस्तस्योपधायांपस्यां उपं दध्यादसंज्ञानमेवास्मैं पशुभिः करोत्यपशुरेव भवति, यद्कामयेत पशुमानृत्स्यादित्यपस्यांस्तस्योपधायं वयस्यां उपं दध्यात्संज्ञानमेवास्मैं पशुभिः करोति पशुमानेव भवति चतस्रः पुरस्तादुपं दधाति तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे (४) मूर्धन्वतीर्भवन्ति तस्मात्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पुरस्तान्मूर्धा पञ्च दक्षिणायाᳬंश्रोण्यामुप दधाति पञ्चोत्तरस्यां तस्मात्पश्चाद्वर्षीयान् पुरस्तात् प्रवणः पशुर्बस्तो वयइति दक्षिणेᳬंस उप दधाति वृष्णिर्वय इत्युत्तरेᳬंसावेव प्रति दधाति व्याघ्रोवय इति दक्षिणे पक्ष उप दधाति सिᳬंहोवय इत्युत्तरे पक्षयोरेव वीर्यं दधाति पुरुषोवयइति (५) मध्ये तस्मात् पुरुषः पशूनामधिपतिः—५ ) [ क्लृप्त्यै प्राणभृतः समनसःकृष्णेइतिपञ्चच ]॥१॥

इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामुप दधातीन्द्राग्निभ्यां वा इमौलोकौ विधृतावनयोर्लोकयोर्विधृत्या अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषेन्द्राग्नी इत्याहेन्द्राग्नी वै देवानांमोजोभृतावोजसैवैनामन्तरिक्षे चिनुते धृत्यै स्वयमातृण्णामुप दधात्यन्तरिक्षं वै स्वयमातृण्णाऽन्तरिक्षमेवोप धत्तेऽश्वमुप ( १ ) घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्योवा अश्वः प्रजापतिनैवाग्निं चिनुते स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्याअथो सुवर्गस्य लोकस्यानुख्यात्यै देवानांवै सुवर्गं लोकं यतां दिशः समव्लीयन्त तएता दिश्या अपश्यन्ता उपादधत ताभिर्वैते दिशोऽदृᳬंहन् यद्दिश्या उपदधाति दिशां विधृत्यै दश प्राणभृतः पुरस्तादुप ( २ ) दधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्ते तस्मात् पुरस्तात् प्राणा ज्योतिष्मतीमुत्तमामुप दधाति तस्मात् प्राणानां वाग्ज्योतिरुत्तमा दशोप दधाति दशाक्षरा विराड्विराट् छन्दसां ज्योतिर्ज्योतिरेव पुरस्ताद्धत्ते तस्मात् पुरस्ताज्ज्योतिरुपास्महे छन्दाᳬंसि पशुष्वाजिमयुस्तान् बृहत्युदजयत्तस्माद्वार्हताः ( ३ ) पशव उच्यन्ते मा छन्द इति दक्षिणत उप दधाति तस्माद्दक्षिणावृ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तोमासाः पृथिवी छन्द इति पश्चात् प्रतिष्ठित्या अग्निर्देवतेत्युत्तरत ओजोवा अग्निरोज एवो-
त्तरतोधत्ते तस्मादुत्तरतोऽभिप्रयायी जयति षट्त्रिꣳशत् सम्पद्यन्ते षट्त्रिꣳशदक्षरा बृहतीबा-
र्हताः पशवोबृहत्यैवास्मै पशूनवरुन्धे बृहती छन्दसाꣳ स्वाराज्यं परीयाय यस्यैताः ( ४ )
उपधीयन्ते गच्छति स्वाराज्यꣳ सप्त वालखिल्याः पुरस्तादुप दधाति सप्त पश्चात् सप्त वै शीर्षण्याः
प्राणा द्वाववाञ्चौ प्राणानाꣳ सवीर्यत्वाय मूर्धासि राडिति पुरस्तादुप दधाति यन्त्री राडिति पश्चात्
प्राणानेवास्मै समीचोदधाति — ३४ ) [ उपोपबार्हताएताश्चतुस्त्रिꣳशच्च ] ॥ २ ॥ देवा वै
यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया अपश्यन् ता अन्यथाऽनूच्या-
न्यथोपादधत तदसुरा नान्ववायन् ततोदेवा अभवन् पराऽसुरा यदक्ष्णयास्तोमीया अन्यथाऽनू-
च्यान्यथोपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्योभवत्याशुस्त्रिवृदिति पुर-
स्तादुपदधाति यज्ञमुखंवै त्रिवृत् (१) यज्ञमुखमेव पुरस्ताद्वियातयति व्योमसप्तदशइति दक्षिणतोऽ
न्नं वै व्योमान्नꣳसप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते धरुणएकविꣳशइति पश्चात्
प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्तओजः पञ्चदश ओज
एवोत्तरतोधत्ते तस्मादुत्तरतोऽभिप्रयायी जयति प्रतूर्तिरष्टादश इति पुरस्तात् ( २ ) उप दधाति द्वौ
त्रिवृतावभिपूर्वं यज्ञमुखे वि यातयत्यभिवर्तः सविꣳश इति दक्षिणतोऽन्नं वा अभिवर्तोऽन्नꣳ स-
विꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते वर्चो द्वाविꣳश इति पश्चाद्यद्विꣳशतिर्द्वे तेन वि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



राजौ यद्वै प्रतिष्ठा तेन विराजोरेवाभिपूर्वमन्नाद्ये प्रति तिष्ठति तपोनवदश इत्युत्तरतस्तस्मात् सव्यः (३) हस्तयोस्तपस्वितरोयोनिश्चतुर्विंशइति पुरस्तादुप दधाति चतुर्विंशत्यक्षरा गायत्री गायत्री यज्ञमुखं यज्ञमुखमेव पुरस्ताद्वि यातयति गर्भाः पञ्चविंश इति दक्षिणतोऽन्नं वै गर्भा अन्नं पञ्चविंशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यत ओजस्त्रिणवइति पश्चादिमे वै लोकास्त्रिणवएष्वेव लोकेषु प्रति तिष्ठति सम्भरणस्त्रयोविंशइति (४) उत्तरतस्तस्मात् सव्योहस्तयोः सम्भार्यतरः क्रतुरेकत्रिंशइति पुरस्तादुप दधाति वाग्वै क्रतुर्यज्ञमुखं वाग्यज्ञमुखमेव पुरस्ताद्वि यातयति ब्रध्नस्य विष्टपं चतुस्त्रिंश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतोधत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः प्रतिष्ठा त्रयस्त्रिंशइति पश्चात् प्रतिष्ठित्यै नाकः षट्त्रिंशइत्युत्तरतः सुवर्गो वै (५) लोकोनाकः सुवर्गस्य लोकस्य समष्ट्यै (५) [ त्रिवृत्पुरस्तात्सव्य-इतिवैपञ्चच] ॥ ३ ॥ अग्नेर्भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं ब्रह्म यज्ञमुखं त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति नृचक्षसां भागोऽसीति दक्षिणतः शुश्रुवांसो वै नृचक्षसोऽन्नं धाता जातायैवास्मा अन्नमपि दधाति तस्माज्जातोऽन्नमत्ति जनित्रंस्पृतं संसदशस्तोमइत्याहान्नं वै जनित्रम् (१) अन्नंसप्तदशोऽन्नमेव दक्षिणतोधत्ते तस्माद्दक्षिणेनान्नमद्यते मित्रस्य भागोऽसीति पश्चात् प्राणोवै मित्रोऽपानोवरुणः प्राणापानावेवास्मिन् दधाति दिवो वृष्टिर्वाताः स्पृताएकविंशस्तोमइत्याह प्रतिष्ठा वा एकविंशः प्रतिष्ठित्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इन्द्रस्य भागोऽसीत्युत्तरत ओजो वा इन्द्रओजोविष्णुरोजः क्षत्रमोजः पञ्चदशः ( २ ) ओजएवो-त्तरतोधत्ते तस्मादुत्तरतोऽभिप्रयायी जयति वसूनां भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वै वसवो यज्ञमुखꣳ रुद्रा यज्ञमुखं चतुर्विꣳशोयज्ञमुखमेव पुरस्ताद्वि यातयत्यादित्यानां भागोऽसीति दक्षिणतोऽन्नं वा आदित्या अन्नं मरुतोऽन्नं गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतोधत्ते तस्मा-द्दक्षिणेनाऽन्नमद्यतेऽदित्यै भागः ( ३ ) असीति पश्चात् प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै देवस्य सवितुर्भागोऽसीत्युत्तरतोब्रह्म वै देवः सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोर्धी ब्रह्मवर्चसितरः सावित्रवती भवति प्रसू-त्यै तस्माद्ब्राह्मणानामुदीची सनिः प्रसूता धर्त्रश्चतुष्टोम इति पुरस्तादुप दधाति यज्ञमुखं वै धर्त्रः ( ४ ) यज्ञमुखं चतुष्टोमोयज्ञमुखमेव पुरस्ताद्वि यातयति यावानां भागोऽसीति दक्षिण-तोमासा वै यावा अर्धमासा अयावास्तस्माद्दक्षिणावृत्तोमासा अन्नं वै यावा अन्नं प्रजा अन्न-मेव दक्षिणतोधत्ते तस्माद्दक्षिणेनान्नमद्यत ऋभूणां भागोऽसीति पश्चात् प्रतिष्ठित्यै विवर्तो ऽष्टाचत्वारिꣳशइत्युत्तरतोऽनयोर्लोकयोः सवीर्यत्वाय तस्मादिमौ लोकौ समावद्वीर्यौ ( ५ ) यस्य मुख्यवतीः पुरस्तादुपधीयन्ते मुख्य एव भवत्यास्य मुख्योजायते यस्याऽन्नवतीर्दक्षिणतोऽत्त्यन्नमा स्यान्नादोजायते यस्य प्रतिष्ठावतीः पश्चात् प्रत्येव तिष्ठति यस्यौजस्वतीरुत्तरतओजस्व्येवभवत्या स्यौजस्वी जायतेऽर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा विधा ( ६ ) विधीयतेऽ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कंएव तदक्ष्यंमनु वि धीयतेऽत्त्यन्नं मा स्याञ्चादोजायते यस्यैषा विधा विधीयते यउ चैनामेवं वेद सृष्टीरुपं दधाति यथासृष्टमेवाव रुन्धे न वा इदं दिवा न नक्तमासीदव्यांवृत्तं ते देवा एता व्युष्टीरप-श्यन् ता उपादधत ततोवा इदम्(७) व्यौच्छद्यस्यैताउपधीयन्ते व्येवास्मा उच्छत्यथो तमएवाप हते १४) [ जनित्रंपञ्चदशोभागो धर्त्रःसमावद्वीयौं विधेदंचतुर्दशच ] ॥४॥ अग्ने जातान् प्र णुदा नः सपत्नानितिं पुरस्तादुप दधाति जातानेव भ्रातृव्यान् प्र णुदते सहसा जातानिति पश्चाज्जनि-ष्यमाणानेव प्रति नुदते चतुश्चत्वारिंशस्तोमइति दक्षिणतोब्रह्मवर्चसं वै चतुश्चत्वारिंशोब्रह्मव-र्चसमेव दक्षिणतोधत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः षोडशस्तोम इत्युत्तरत ओजोवैषोडश ओजएवोत्तरतो धत्ते तस्मात् ( १ ) उत्तरतोऽभिप्रयायी जयति वज्रो वै चतुश्चत्वारिंशो वज्रः षोडशोयदेते इष्टके उपदधाति जाताश्चैव जनिष्यमाणाश्च भ्रातृव्यान् प्र णुद्य वज्रमनु प्र हरति स्तृत्यै पुरीषवतीं मध्य उप दधाति पुरीषं वै मध्यमात्मनः सात्मानमेवाग्निं चिनुते सा त्मामुष्मिन् लोके भवति यएवं वेदैता वा असपत्नानामेष्टकायस्यैता उपधीयन्ते ( २ ) ना-स्य सपत्नो भवति पशुर्वा एष यदग्निर्विराजं उत्तमायां चित्यामुप दधाति विराजमेवोत्तमां प-शुषु दधाति तस्मात् पशुमानुत्तमां वाचं वदति दशदशोप दधाति सवीर्यत्वायाक्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यानि वै छन्दांसि सुवर्ग्याण्यासन् तैर्देवाः सुवर्गं लोकमायन् तेनर्षयः ( ३ ) अश्राम्यन् ते तपोऽतप्यन्त तानि तपसाऽपश्यन् तेभ्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एता इष्टका निरमिमतेवश्छन्दो वरिवश्छन्द इति ता उपा दधत ताभिर्वै ते सुवर्गं लोकमाय-
न् यदेता इष्टका उपदधाति यान्येव छन्दांꣳसि सुवर्ग्याणि तैरेव यजमानः सुवर्गं लोकमेति
यज्ञेन वै प्रजापतिः प्रजाअसृजत ताः स्तोमभागैरेवासृजत यत् ( ४ ) स्तोमभागाउपदधाति प्रजा
एव तद्यजमानः सृजते बृहस्पतिर्वा एतद्यज्ञस्य तेजः समभरद्यत् स्तोमभागा यत् स्तोमभागा
उपदधाति सतेजसमेवाग्निं चिनुते बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यद्यत् स्तोमभागायत्-
स्तोमभागाउपदधाति यज्ञस्य प्रतिष्ठित्यै सप्त सप्तोप दधाति सवीर्यत्वाय तिस्रोमध्ये प्रतिष्ठित्यै—
४३ ) [ तस्मादुपधीयन्तऋषयोयत्रिचत्वारिꣳशच्च ] ॥ ५ ॥ रश्मिरित्येवादित्यमसृजत
प्रेतिरिति धर्ममन्वितिरिति दिवꣳ सन्धिरित्यन्तरिक्षं प्रतिधिरिति पृथिवीं विष्टम्भइति वृष्टिं प्रवेत्यह
रनुवेति रात्रिमुशिगिति वसून् प्रकेत इति रुद्रान् सुदीतिरित्यादित्यानोजइति पितॄꣳस्तन्तुरिति
प्रजाः पृतनाषाडिति पशून् रेवदित्योषधीरभिजिदसि युक्तग्रावा ( १ ) इन्द्राय त्वेन्द्रं जिन्वे
त्येव दक्षिणतोवज्रं पर्यौहदभिजित्यैताः प्रजा अपप्राणा असृजत तास्वधिपतिरसीत्येव प्रा-
णमदधाद्यन्तेत्यपानꣳसꣳसर्पइति चक्षुर्वयोधा इति श्रोत्रं ताः प्रजाः प्राणतीरपानतीः पश्य-
न्तीः शृण्वतीर्न मिथुनी अभवन् तासु त्रिवृदसीत्येव मिथुनमदधात्ताः प्रजा मिथुनी ( २ )
भवन्तीर्न प्राजायन्त ताः सꣳरोहोऽसि नीरोहोऽसीत्येव प्राजनयत्ताः प्रजाः प्रजाता नप्रत्यति-
ष्ठन् ता वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयद्यदाह वसुकोऽसि वे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



षंश्चिरसि वस्यंष्टिरसीति प्रजाएव प्रजाता एषु लोकेषु प्रतिष्ठापयति सात्माऽन्तरिक्षम् ( ३ ) रोहति सप्राणोऽमुष्मिँल्लोके प्रति तिष्ठत्यव्यर्धुकः प्राणापानाभ्यां भवति यएवं वेद—१२ ) [ युक्तग्रावामिथुनीअन्तरिक्षंद्वादशच ] ॥ ६ ॥ नाकसद्भिर्वै देवाः सुवर्गं लोकमायन् तन्नाकसदांनाकसत्त्वं यन्नाकसद उपदधाति नाकसद्भिरेव तद्यजमानः सुवर्गं लोकमेति सुवर्गोवै लोको नाको यस्यैता उपधीयन्ते नास्मा अकं भवति यजमानायतनं वै नाकसदोयन्नाकसद उपदधात्यायतनमेव तद्यजमानः कुरुते पृष्ठानां वा एतत्तेजः संभृतं यन्नाकसदोयन्नाकसदः ( १ ) उपदधाति पृष्ठानामेव तेजोऽव रुन्धे पञ्चचोडा उप दधात्यप्सरस एवैनमेता भूता अमुष्मिँल्लोकउप शेरेऽथोतनूपानीरेवैता यजमानस्य यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्यआवृश्चति ताजगार्तिमाच्छंत्युत्तरा नाकसद्भ्यउप दधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत् ( २ ) पश्चात् प्राचीमुत्तमामुप दधाति तस्मात् पश्चात् प्राची पत्न्यन्वास्ते स्वयमातृण्णाञ्च विकर्णीञ्चोत्तमे उप दधाति प्राणोवै स्वयमातृण्णायुर्विकर्णी प्राणञ्चैवायुश्च प्राणानामुत्तमौ धत्ते तस्मात् प्राणश्चायुश्च प्राणानामुत्तमौ नान्यामुत्तरामिष्टकामुप दध्याद्यदन्यामुत्तरामिष्टकामुपदध्यात् पशूनाम् ( ३ ) चयजमानस्य च प्राणं चायुश्चापि दध्यात्तस्मान्नान्योत्तरेष्टकोपधेया स्वयमातृण्णामुप दधात्यसौ वै स्वयमातृण्णामूमेवोप धत्तेऽश्वमुपघ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्योवा अश्वः प्रजापतिनैवाग्निं चिनुते

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.


स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्या एषा वै ( ४ ) देवानां विक्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति देवानामेव विक्रान्ति मनु वि क्रमत उत्तरतउप दधाति तस्मादुत्तरत उपचारोऽग्निर्वायुमती भवति समिध्यै—२२ ) [ नाकसदस्तत्पशूनांवेद्वाविंशतिश्च ]॥ ७॥ छन्दाꣳस्युप दधाति पशवोवै छन्दाꣳसि पशूनेवाव रुन्धे छन्दाꣳसि वै देवानां वामं पशवो वाममेव पशूनव रुन्ध एताꣳ ह वै यज्ञसेनश्चैत्रियायणश्चितिं विदांचकार तया वै स पशूनवारुन्ध यदेतामुपदधाति पशूनेवाव रुन्धे गायत्रीः पुरस्तादुप दधाति तेजो वै गायत्री तेज एव ( १ ) मुखतो धत्ते मूर्धन्वतीर्भवन्ति मूर्धानमेवैनꣳसमानानांकरोति त्रिष्टुभउप दधातीन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतोधत्ते जगतीरुप दधाति जागता वै पशवः पशूनेवाव रुन्धेऽनुष्टुभउप दधाति प्राणा वा अनुष्टुप् प्राणनामुत्सृष्टयै बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दाꣳस्युप दधाति विषुरूपा वै पशवः पशवः ( २ ) छन्दाꣳसि विषुरूपानेव पशूनव रुन्धे विषुरूपमस्य गृहे दृश्यते यस्यैता उपधीयन्ते य उ चैनामेवं वेदातिछन्दसमुप दधात्यतिछन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनं छन्दोभिश्चिनुते वर्ष्मवा एषा छन्दसां यदतिछन्दा यदतिछन्दसमुपदधाति वर्ष्मैवैनꣳ समानानां करोति द्विपदा उप दधाति द्विपाद्यजमानः ( ३ ) प्रतिष्ठित्यै—१ ) [ एवपशवोयजमानएकंच ]॥ ८॥ सर्वाभ्योवै देवताभ्योऽग्निश्चीयते यत् सयुजो नोपदध्याद्देवता अस्याग्निं वृञ्जीरन् यत् सयुजं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उपदधात्यात्मन्नेवैनꣳ सयुजं चिनुते नाग्निना व्यृध्यतेऽथो यथा पुरुषः स्नावभिः सन्तत एवमेवैताभिरग्निः सन्ततोऽग्निना वै देवाः सुवर्गं लोकमायन् ता अमूः कृत्तिका अभवन् यस्यैता उपधीयन्ते सुवर्गमेव (१) लोकमेति गच्छति प्रकाशं चित्रमेव भवति मण्डलेष्टका उप दधातीमे वै लोका मण्डलेष्टका इमे खलु वै लोका देवपुरा देवपुरा एव प्र विशति नार्तिमार्च्छत्यग्निं चिक्यानो विश्वज्योतिष उप दधातीमानेवैताभिर्लोकान् ज्योतिष्मतः कुरुतेऽथो प्राणानेवैता यजमानस्य दाधत्येता वै देवताः सुवर्ग्यास्ता एव (२) अन्वारभ्य सुवर्गं लोकमेति—४) [एवैवचत्वारिंच] ॥ ९ ॥ वृष्टिसनीरुपदधाति वृष्टिमेवावरुन्धे यदेकधोप दध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात् सर्वानृतून् वर्षति पुरोवातसनिरसीत्याहैतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्धे संयानीभिर्वै देवा इमाँल्लोकान् समयुस्तत् संयानीनाꣳ संयानित्वं यत् संयानीरुपदधाति यथाप्सु नावा संयात्येवम् (१) एवैताभिर्यजमान इमाँल्लोकान्त्सं याति प्लवो वा एषोऽग्नेर्यत् संयानीर्यत् संयानीरुपदधाति प्लवमेवैतमग्नय उप दधात्युत यस्यैतासूपहितास्वापोऽग्निꣳ हरन्त्यह्वैत एवास्याग्निरादित्येष्टका उप दधात्यादित्या वा एतं भूत्यै प्रति नुदन्ते योऽलम्भूत्यै सन् भूतिं न प्राप्नोत्यादित्याः (२) एवैनं भूतिं गमयन्त्यसौ वा एतस्यादित्यो रुचमा दत्ते योऽग्निं चित्वा न रोचते यदादित्येष्टका उप दधात्यसावेवास्मिन्नादित्यो रुचं दधाति यथासौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते घृतेष्टका उप दधात्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं धाम्ना समर्धयति (३)

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथो तेजसानुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन् तेजो दधाति प्रजापतिरग्निमचिनुत स यशसा व्यार्ध्यत स एता यशोदा अपश्यत्ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन् धत्ते पञ्चोप दधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन् यशो दधाति (४९) [ एवमादित्याअर्धयत्येकान्नपञ्चाशच्च ] ॥ १० ॥ देवासुराः संयत्ता आसन् कनीयाꣳसो देवा आसन् भूयाꣳसोऽसुरास्ते देवा एता इष्टका अपश्यन् ता उपादधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन् वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन् प्राच्यसीति प्राचीं दिशमजयन्नूर्ध्वासीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन्ततो देवा अभवन् (१) पराऽसुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभीमाँल्लोकान् जयति भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यप्सुषदसि श्येनसदसीत्याहैतद्वा अग्नेरूपꣳ रूपेणैवाग्निमव रुन्धे पृथिव्यास्त्वा द्रविणे सादयामीत्याहेमानेवैताभिर्लोकान् द्रविणावतः कुरुत आयुष्या उप दधात्यायुरेव (२) अस्मिन् दधात्यग्ने यत्ते परꣳ हृन्नामेत्याहैतद्वा अग्नेः प्रियं धाम प्रियमेवास्य धामोपाप्नोति तावेहि सꣳरभावहा इत्याह व्येवैनेन परि धत्ते पाञ्चजन्येष्वप्येध्यग्न इत्याहैष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मादेवमाहर्तव्या उप (३) दधात्येतद्वा ऋतूनां प्रियं धाम यदृतव्या ऋतूनामेव प्रियं धामाव रुन्धे सुमेक इत्याह संवत्सरो वै सुमेकः संवत्सरस्यैव प्रियं धामोपाप्नोति—२६) [ अभवन्नेवोप षड्विꣳशतिश्च ] ॥ ११ ॥ प्रजापतेरक्ष्यश्वयत्तत्परापत

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तदश्वोऽभवद्यदश्वयत्तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष वै प्रजापतिꣳ सर्वं करोति योऽश्वमेधेन यजते सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजꣳ सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन् सर्वं पाप्मानम् ( १ ) तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजतेय उ चैनमेवं वेदोत्तरं वै तत् प्रजापतेरक्ष्यश्वयत्तस्मादश्वस्योत्तरतोऽव द्यन्ति दक्षिणतोऽन्येषां पशूनां वैतसः कटोभवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वेतसः स्व एवैनं योनौ प्रति ष्ठापयति चतुष्टोमः स्तोमोभवति सरड्ढ वा अश्वस्य सक्थ्यावृहत् ( २ ) तद्देवाश्चतुष्टोमेनैव प्रत्यदधुर्यच्चतुष्टोमः स्तोमोभवत्यश्वस्य सर्वत्वाय—१२ ) [ पाप्मानमवृहद्द्वादशच ] ॥ १२ ॥ उत्सन्नयज्ञ ( २५५ ) इन्द्राग्नी ( २३४ ) देवा ( २५५ ) अग्ने ( ३६४ ) रत्ने ( २४३ ) रश्मि ( १६२ ) नाकसद्भि ( २२२ ) श्छन्दाꣳसि ( ३५१ ) सर्वाभ्यो ( १०४ ) वृष्टिसनी ( १९९ ) देवासुराः ( १७६ ) प्रजापते ( ११२ ) द्वादश ( २४७७ ) ॥ १२ ॥ इति तैत्तिरीयसंहितायां पंचमकाण्डे तृतीयः प्रपाठकः ॥

ॐम् देवासुराः संयत्ताआसन् ते न व्यजयन्त स एता इन्द्रस्तनूरपश्यत्ता उपाधत्त ताभिर्वै स तनुवमिन्द्रियं वीर्यमात्मन्नधत्त ततोदेवा अभवन् परासुरा यदिन्द्रतनूरुपदधाति तनुवमेव ताभिरिन्द्रियं वीर्यं यजमान आत्मन्धत्तेऽथो सेन्द्रमेवाग्निꣳ सतनुं चिनुते भवत्यात्मना परास्य भ्रातृव्यः ( १ ) भवति यज्ञो देवेभ्योऽपाक्रामत्तमवरुधन्नाशक्नुवन् त एता यज्ञतनू-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रेपश्यन् ता उपादधत् ताभिर्वै ते यज्ञमवारुन्धत् यद्यज्ञतनूरुपदधाति यज्ञमेव ताभिर्यजमानोऽव रुन्धे त्रयस्त्रिꣳशतमुप दधाति त्रयस्त्रिꣳशद्वै देवता देवता एवाव रुन्धेऽथो सात्मानमेवाग्निꣳसतनुं चिनुते सात्माऽमुष्मिंल्लोके ( २ ) भवति यएवं वेद ज्योतिष्मतीरुप दधाति ज्योतिरेवास्मिन् दधात्येताभिर्वा अग्निश्चितोज्वलति ताभिरेवैनꣳसमिन्ध उभयोरस्मै लोकयोर्ज्योतिर्भवति नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीꣳषि तान्येवाव रुन्धे सुकृतां वा एतानि ज्योतीꣳषि यन्नक्षत्राणि तान्येवाप्नोत्यथो अनुकाशमेवैतानि ( ३ ) ज्योतीꣳषि कुरुते सुवर्गस्य लोकस्यानुख्यात्यै यत्सꣳस्पृष्टा उपदध्याद्वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसꣳस्पृष्टा उप दधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति पुरस्तादन्याः प्रतीचीरुप दधाति पश्चादन्याः प्राचीस्तस्मात् प्राचीनानि च प्रतीचीनानि च नक्षत्राण्या वर्तन्ते — ४१ ) [ भातृव्यो-लोकएतान्येकचत्वारिꣳशच्च ] ॥ १ ॥ ऋतव्या उप दधात्यृतूनां क्लृप्त्यै द्वन्द्वमुप दधाति तस्माद्द्वन्द्वमृतवोऽधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिववाएषा द्वन्द्वमन्यासु चितीषूप दधाति चतस्रो मध्ये धृत्या अन्तः श्लेषणं वा एताश्चितीनां यदृतव्या यदृतव्या उपदधाति चितीनां विधृत्या अवकामनूप दधात्येषा वाअग्नेर्योनिः सयोनिम् ( १ ) एवाग्निं चिनुतउवाच ह विश्वामित्रोऽददित्स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेददिति संवत्सरोवाएतं प्रतिष्ठायै नुदते योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयोभवन्त्यथषष्ठीं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चितिं चिनुते षड्वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठत्येता वै ( २ ) अधिपत्नीर्नामेष्टका यस्यै-
ता उपधीयन्तेऽधिपतिरेव समानानां भवति यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ
वृश्चति ताजगार्तिमार्च्छेत्यङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य निष्कृतिरासीत्तामृषिभ्यः प्रत्यौहन्
तद्धिरण्यमभवद्यद्धिरण्यशल्कैः प्रोक्षति यज्ञस्य निष्कृत्या अथो भेषजमेवास्मै करोति ( ३ ) अथो
रूपेणैवैनꣳ समर्धयत्यथो हिरण्यज्योतिषैव सुवर्गं लोकमेति साहस्रवता प्रोक्षति साहस्रः प्रजापतिः
प्रजापतेराप्त्या इमा मे अग्न इष्टका धेनवः सन्त्वित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रा-
मुष्मिँल्लोक उप तिष्ठन्ते — ३९ ) [ सयोनिं वै करोत्येकान्नचत्वारिꣳशच्च ] ॥ २ ॥ रुद्रो वा
एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भाग-
धेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनै-
वैनꣳ शमयति नार्तिमार्च्छत्यध्वर्युर्न यजमानो यद्ग्राम्याणां पशूनाम् ( १ ) पयसा जुहुयाद्ग्राम्यान्
पशूञ्छुचार्पयेद्यदारण्यानामारण्यान् जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्
पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी
वा एषा यदजाहुत्यैव जुहोति न ग्राम्यान् पशून् हिनस्ति नारण्यानङ्गिरसः सुवर्गं लोकं यन्तः ( २ )
अजायां घर्मं प्रासिञ्चन्त्सा शोचन्ती पर्णं परा जिहीत सोऽर्कोऽभवत्तदर्कस्यार्कत्वमर्कपर्णेन जुहोति
सयोनित्वायोदङ् तिष्ठन् जुहोत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवदयते चरमायामि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ष्टकायां जुहोत्यन्तत एव रुद्रं निरवदयते त्रेधाविभक्तं जुहोति त्रयं इमे लोका इमानेव लोका न्त्समावद्वीर्यान् करोतीयत्यग्रे जुहोति ( ३ ) अथेयत्यथेयति त्रयं इमे लोका एभ्य एवैनं लोकेभ्यः शमयति तिस्र उत्तरा आहुतीर्जुहोति षट् सम्पद्यन्ते षड्वा ऋतवऋतुभिरेवैनं शमयति यद्नुपरिक्रामं जुहुयादन्तरवचारिणं रुद्रं कुर्यादथो खल्वाहुः कस्यां वाह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्यमपरिवर्गमेवैनं शमयति ( ४ ) एतावै देवताः सुवर्ग्या या उत्तमास्ता यजमानं वाचयति ताभिरेवैनं सुवर्गं लोकं गमयति यं द्विष्यात्तस्य सञ्चरे पशूनां न्यस्येद्यः प्रथमः पशुरभितिष्ठति सआर्तिमार्च्छति— ३० ) [ पशूनांयन्तो जुहोतिशमयतित्रिं शच्च ]

॥ ३ ॥ अश्मन्नूर्जमिति परिषिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनं तृप्तोऽक्षुध्यन्न शोचन्नमुष्मिँल्लोक उपतिष्ठते तृप्यति प्रजया पशुभिर्य एवं वेद तां न इषमूर्जं धत्त मरुतः संरराणा इत्याहान्नं वा ऊर्गन्नं मरुतोऽन्नमेवाव रुन्धेऽश्मंस्ते क्षुदमुन्ते शुक् ( १ ) ऋच्छतु यं द्विष्म इत्याह यमेव द्वेष्टि तमस्य क्षुधा च शुचा चार्पयति त्रिः परिषिञ्चन् पर्येति त्रिवृद्वाअग्नि र्यावानेवाग्निस्तस्य शुचं शमयति त्रिः पुनः पर्येति षट् सम्पद्यन्ते षड्वाऋतव ऋतुभिरेवास्य शुचं शमयत्यपां वा एतत्पुष्पं यद्वेतसोऽपाम् ( २ ) शरोऽवका वेतसशाखया चावकाभिश्च विकर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शुचं शमयति योवाअग्निं चितं प्रथमः पशुरधिक्रामतीश्वरो वै तं शुचा प्रदहो मण्डूकेन वि कर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नारण्येषु तमेव शुचार्पयत्यष्टाभिर्वि कर्षति ( ३ ) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्य शुचंꣳशमयति पावकवतीभिरन्नं वै पावकोऽन्नेनैवास्य शुचꣳशमयति मृत्युर्वा एष यदग्नि र्ब्रह्मण एतद्रूपं यत् कृष्णाजिनं कार्ष्णी उपानहावुप मुञ्चते ब्रह्मणैव मृत्योरन्तर्धत्तेऽन्तर्मृत्यो-र्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुपमुञ्चतेऽन्यां नान्तः ( ४ ) एव मृत्योर्धत्तेऽवान्नाद्यꣳ रुन्धे न-मस्ते हरसे शोचिष इत्याहनमस्कृत्य हिवसीयाꣳसमुपचरन्त्यन्यं तं अस्मत्तपन्तु हेतय इत्याह यमेव द्वेष्टि तमस्य शुचाऽर्पयति पावको अस्मभ्यꣳ शिवोभवेत्याहान्नं वै पावकोऽन्नमेवाव रुन्धे द्वाभ्यामधि क्रामति प्रतिष्ठित्या अपस्यवतीभ्याꣳ शान्त्यै—४९ ) [ शुगर्पयति कर्षति नान्तरे कान्नपञ्चाशच्च ] ॥ ४ ॥ नृषदे वडिति व्याघारयति पङ्क्त्याहुत्या यज्ञमुखमा रभतेऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यद्वषट् कुर्याद्यातयामाऽस्य वषट्-कारः स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट् करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति हुतादोवा अन्ये देवाः ( १ ) अहु-तादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति हुतादश्चैव देवा नहुतादश्च यजमानः प्रीणाति ते यजमानं प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाऽहु-तादो ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणावोक्षत्युभयस्यावरुध्यै ग्रमुष्टि-नाऽवोक्षति प्राजापत्यः ( २ ) वै ग्रमुष्टिः सयोनित्वाय द्वाभ्यां प्रतिष्ठित्या अनुपरिचारमवो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षत्यपरिवर्गमेवैनान् प्रीणाति वि वा एष प्राणैः प्रजया पशुभिर्ऋध्यते योऽग्निं चिन्वन्न धिक्रामति प्राणदा अपानदा इत्याह प्राणानेवात्मन्धत्ते वर्चोदा वरिवोदा इत्याह प्रजा वै वर्चः पशवो वरिवः प्रजामेव पशूनात्मन्धत्त इन्द्रो वृत्रमहन् तं वृत्रः ( ३ ) हतः षोडशभिर्भोगैरसिनात् स एतामग्नयेऽनीकवत आहुतिमपश्यत्तामजुहोत्तस्याग्निरनीकवान् स्वेन भागधेयेन प्रीतः षोडशधा वृत्रस्य भोगानप्यदहद्वैश्वकर्मणेन पाप्मनो निरमुच्यत यदग्नयेऽनीकवत आहुतिं जुहोत्यग्निरेवास्यानीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपिदहति वैश्वकर्मणेन पाप्मनोनिर्मुच्यते यं कामयेत चिरं पाप्मनः ( ४ ) निर्मुच्येतेत्येकैकंतस्य जुहुयाच्चिरमेव पाप्मनोनिर्मुच्यते यं कामयेत ताजकपाप्मनोनिर्मुच्येतेति सर्वाणि तस्यानुद्रुत्यजुहुयात्ताजगेव पाप्मनोनिर्मुच्यतेथो खलुनानैव सूक्ताभ्यां जुहोति नानैव सूक्तयोर्वीर्यं दधात्यथो प्रतिष्ठित्यै—४० ) [ देवाः प्राजापत्योवृत्रः पाप्मनश्चत्वारिंशच्च ] ॥ ५ ॥ उदेनमुत्तरान्नयेति समिधआदधाति यथाजनंयतेवसंकरोति तादृगे व तत्तिस्रआदधाति त्रिवृद्धाअग्निर्यावानेवाग्निस्तस्मै भागधेयं करोत्यौदुंबरीर्भवंत्यूर्ग्वाउदुंबरऊर्जमेवास्माअपिदधात्युदुत्वा विश्वेदेवाइत्याह प्राणावै विश्वेदेवाः प्राणैः ( १ ) एवैनमुद्यच्छतेग्ने भरन्तु चित्तिभिरित्याह यस्माएवैनं चित्तायोद्यच्छते तेनैवैनꣳसमर्धयति पंच दिशोदैवीर्यज्ञमवंतु देवीरित्याह दिशोह्येषोनुप्रच्यवते पामतिं दुर्मतिं बाधमानाइत्याहरक्षसामपहत्यै रायस्पोषेयज्ञपतिमाभजन्तीरित्याह पशवोवै रायस्पोषः ( २ ) पशूनेवावरु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धे षड्भिर्हरतिषड्वा ऋतवऋतुभिरेवैनꣳहरति द्वे परिगृह्यवतीभवतोरक्षसामपहत्यै सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै ततः पावकाआशिषोनो जुषंतामित्याहान्नं वै पावकोन्नमेवावरुंधे देवासुराः संयत्ताआसन्ते देवाएतदप्रतिरथमपश्यंतेन वै ते प्रति ( ३ ) असुरानजयन्तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथं द्वितीयोहोतान्वाहा प्रत्येव तेन यजमानोभ्रातृव्यान्जयत्यथो अनभिजितमेवाभिजयति दशर्चंभवति दशाक्षरा विराड्विराजेमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अथो दशाक्षराविराडन्नंविराड्विराज्येवान्नाद्ये प्रतितिष्ठत्यसदिव वा अन्तरिक्षमंतरिक्षमिवाग्नीध्रमाग्नीध्रे ( ४ ) अश्मानं निदधाति सत्वायद्वाभ्यां प्रतिष्ठित्यै विमानएषदिवोमध्यआस्तइत्याहव्येवैतया मिमीतेमध्ये दिवोनिहितः पृश्निरश्मेत्याहान्नं वै पृश्न्यन्नमेवावरुंधेचतसृभिरापुच्छादेति चत्वारि छंदाꣳसि छंदोभिरेवेंद्रं विश्वाअवीवृधन्नित्याह वृद्धिमेवोपावर्तते वाजानाꣳसत्पतिं पतिम् ( ५ ) इत्याहान्नं वै वाजोन्नमेवावरुंधे सुम्नहूर्यज्ञोदेवाꣳआचवक्षदित्याह प्रजा वै पशवः सुम्नं प्रजामेव पशूनात्मन् धत्ते यक्षदग्निर्देवोदेवाꣳ आचवक्षदित्याह स्वगाकृत्यै वाजस्य माप्रसवेनोद्ग्राभेणोदग्रभीदित्याहासौवा आदित्यउद्यन्नुद्ग्राभएषः ( ६ ) निम्रोचन्निग्राभोब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणाभ्रातृव्यं निगृह्णाति १०— ) [ प्राणैःपोषोप्रत्याग्नीध्रेपतिमेषदशच ]

॥ ६ ॥ प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्ततेक्रमध्वमाग्निना नाक-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मित्याहेमानेवैतया लोकानूक्रमते पृथिव्या अहमुदंतरिक्षमारुहमित्याहेमानेवैतया लोकान्त्समारोहति सुवर्यन्तोनापेक्षन्तइत्याह सुवर्गमेवैनया लोकमेत्यग्नेप्रेहि ( १ ) प्रथमोदेवयतामित्याहोभयेष्वेवैतया देवमनुष्येषुचक्षुर्दधाति पंचभिरधिक्रामतिपांक्तो यज्ञोयावानेव यज्ञस्तेन सह सुवर्गं लोकमेति नक्तोषासेति पुरोनुवाक्यामन्वाह प्रत्या अग्ने सहस्राक्षेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै तस्मैते विधेम वाजाय स्वाहेत्याहान्नं वै वाजोन्नमेवाव ( २ ) रुन्धे दध्नःपूर्णामौदुंबरीं स्वयमातृण्णायां जुहोत्यूर्ग्वै दध्यूर्गुदुंबरोसौ स्वयमातृण्णामुष्यामेवोर्जंदधाति तस्मादमुतोर्वाचीमूर्जमुप जीवामस्तिसृभिःसादयति त्रिवृद्वा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति प्रेद्धोअग्ने दीदिहि पुरोनइत्यौदुंबरीमादधात्येषा वै सूर्मीकर्णकावत्येतया हस्म ( ३ ) वै देवा असुराणा शततर्हा स्तृंहंति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानोभ्रातृव्याय प्रहरति स्तृत्या अछंबट्कारं विधेम ते परमे जन्मन्नग्नइति वैकंकतीमादधाति भाएवावरुंधे ताᳬं सवितुर्वरेण्यस्य चित्रामिति शमीमयीᳬं शांत्या अग्निर्वाहवा अग्निचितं दुहेग्निचिद्वाग्निं दुहेताम् ( ४ ) सवितुर्वरेण्यस्य चित्रामित्याहेषवा अग्नेर्दोहस्तमस्य कण्वएव श्रायसोवेत्तेन हस्मैनᳬं सदुहे यदेतया समिधमादधात्यग्निचिदेवतदग्निं दुहे सप्त ते अग्ने समिधः सप्त जिह्वाइत्याह सप्तैवास्य साप्तानि प्रीणाति पूर्णया जुहोति पूर्णइवहि प्रजापतिः प्रजापतेः ( ५ ) आप्त्यै न्यूनया जुहोतिन्यूनाद्धि प्रजापतिःप्रजाअसृजतप्रजानाᳬं सृष्ट्या अग्निर्देवेभ्योनिलायतसदिशोनुप्राविशज्जुहन्मनसा दिशोध्यायेद्दिग्भ्यएवैनमवरुंधे दध्नापुरस्ताज्जुहोत्याज्येनोपरिष्टात्तेजश्चै

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वास्मा इंद्रियं च समीची दधाति द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरस्संवत्सरोऽग्निर्वै-
श्वानरः साक्षात् ( ६ ) एव वैश्वानरमवरुंधे यत्प्रयाजानूयाजान्कुर्याद्विकस्तिः सा यज्ञस्य दर्विहोमं
करोति यज्ञस्य प्रतिष्ठित्यै राष्ट्रं वै वैश्वानरो विण्मरुतो वैश्वानरꣳहुत्वा मारुतान् जुहोति राष्ट्र एव वि-
शमनु बध्नात्युच्चैर्वैश्वानरस्याश्रावयत्युपाꣳशु मारुतान्जुहोति तस्माद्राष्ट्रं विशमतिवदति मारुता भवं-
ति मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविशम् ( ७ ) अवरुंधे सप्त भवंति सप्तगणा वै म-
रुतो गणश एव विशमवरुन्धे गणेनं गणमनुद्रुत्य जुहोति विशमेवास्मा अनुवर्त्मानं करोति — २१ )
[ इध्मवंस्मतां प्रजापतेः साक्षान्मनुष्यविशमेकविꣳशतिश्च ] ॥ ७ ॥ वसोर्धारां जुहोति
वसोर्मे धारासदिति वा एषा हूयते घृतस्य वा एनमेषा धारामुष्मिंल्लोके पिन्वमानोपतिष्ठत आज्येन
जुहोति तेजो वा आज्यं तेजो वसोर्धारा तेजसैवास्मै तेजोऽवरुंधेथो कामा वै वसोर्धारा कामानेवावरुंधे
यं कामयेत प्राणानस्यान्नाद्यं वि ( १ ) छिंद्यामिति विग्राहं तस्य जुहुयात्प्राणानेवास्यान्नाद्यं वि-
च्छिनत्ति यं कामयेत प्राणानस्यान्नाद्यꣳ संतनुयामिति संततां तस्य जुहुयात्प्राणानेवास्यान्नाद्यꣳ
संतनोति द्वादश द्वादशानि जुहोति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नमवरुंधेऽन्नं च मेऽक्षुच्च-
म इत्याहैतद्वै ( २ ) अन्नस्य रूपꣳ रूपेणैवान्नमवरुंधेऽग्निश्च म आपश्च म इत्याहैषा वा अन्नस्य योनिः
सयोन्येवान्नमवरुंधेऽर्धेंद्राणि जुहोति देवता एवावरुंधे यत्सर्वेषामर्धमिंद्रः प्रति तस्मादिंद्रो देवतानां
भूयिष्ठभाक्तम इंद्रमुत्तरमाहेंद्रियमेवास्मिन्नुपरिष्टाद्दधाति यज्ञायुधानि जुहोति यज्ञः ( ३ ) वै यज्ञा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



युधानि यज्ञमेवावरुंधेथो एतद्वै यज्ञस्य रूपꣳरूपेणैव यज्ञमवरुंधेवभृथश्चमे स्वगाकारश्चमइत्याह स्वगाकृत्याअग्निश्चमे घर्मश्चमइत्याहैतद्वै ब्रह्मवर्चसस्य रूपꣳरूपेणैव ब्रह्मवर्चसमवरुंधऋक् च मे साम च मइत्याह (४) एतद्वै छंदसाꣳरूपꣳरूपेणैव छंदाꣳस्यवरुंधे गर्भाश्च मे वत्साश्चमइत्याहैतद्वै पशूनाꣳरूपꣳरूपेणैव पशूनवरुंधे कल्पान् जुहोत्यकॢप्तस्य कॢप्त्यै युग्मदयुजे जुहोति मिथुनत्वायोत्तरावती भवतोभिक्रांत्याएका च मे तिस्रश्च मइत्याह देवछंदसं वा एका चतिस्रश्च (५) मनुष्यछंदसं चतस्रश्चाष्टौ च देवछंदसं चैव मनुष्यछंदसं चावरुंधआत्रयस्त्रिꣳशतोजुहोति त्रयस्त्रिꣳशद्वै देवतादेवताएवावरुंधआष्टाचत्वारिꣳशतोजुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुंधे वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादशमासाःसंवत्सरः संवत्सरएव प्रतितिष्ठति (४१) [ विवैयज्ञआहचैकान्नपंचाशच्च ] ॥ ८ ॥ अग्निर्देवेभ्योपाक्रामद्भागधेयमिच्छमानस्तं देवाअब्रुवन्नुपनआवर्तस्व हव्यं नोवहेति सोब्रवीद्वरं वृणै मह्यमेव वाजप्रसवीयंजुहवन्निति तस्मादग्नये वाजप्रसवीयं जुहतियद्वाजप्रसवीयं जुहोत्यग्निमेव तद्भागधेयेन समर्धयत्यथोअभिषेकएवास्य सचतुर्दशाभिर्जुहोतिसप्तग्राम्याओषधयः सप्त (१) आरण्याउभयीषामवरुध्याअन्नस्यान्नस्य जुहोत्यन्नस्यान्नस्यावरुध्याऔदुंबरेण स्रुवेण जुहोत्यूर्ग्वा उदुंवरऊर्गन्नमूर्जैवास्माऊर्जमन्नमवरुंधेग्निर्वै देवानामभिषिक्तोग्निचिन्मनुष्याणां तस्मादग्निचिद्वर्षति न धावेदवरुद्धꣳह्यस्यान्नमन्नमिवखलु वै वर्षंयद्धावेदन्नाद्याद्धावेदुपावर्तेतान्नाद्यमेवाभि (२) उपावर्तते नक्तोषासेति कृष्णायैश्वेतव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्सायैपयसा जुहोत्यह्नैवास्मै रात्रिं प्रदापयति रात्रियाहरहोरात्रे एवास्मै प्रत्ते काममन्नाद्यं दुहाते राष्ट्रभृतोजुहोति राष्ट्रमेवावरुंधे षड्भिर्जुहोति षड्वाऋतवऋतुष्वेव प्रतितिष्ठति भुवनस्य पतइति रथमुखे पंचाहुतीर्जुहोति वज्रोवै रथोवज्रेणैवदिशः ( ३ ) अभिजयत्यग्निचितꣳ हवाअमुष्मिन्लोके वातोभिपवतेवातनामानि जुहोत्यभ्येवैनममुष्मिन्लोके वातः पवते त्रीणि जुहोति त्रयइमे लोकाएभ्यएव लोकेभ्योवातमवरुंधे समुद्रोसि नभस्वानित्याहैतद्वै वातस्य रूपꣳरूपेणैव वातमवरुंधेंजलिना जुहोति नह्येतेषामन्यथा ( ४ ) आहुतिरवकल्पते—२ ) [ सप्ताभिदिशोन्यथाद्वेच ] ॥९॥ सुवर्गाय वै लोकाय देवरथोयुज्यते यत्राकूताय मनुष्यरथएषखलु वै देव रथोयदग्निरग्निं युनज्मिशवसा घृतेनेत्याह युनक्त्येवैनꣳसएनं युक्तः सुवर्गं लोकमभिवहति यत्सर्वाभिः पंचभिर्युज्याद्युक्तोस्याग्निः प्रच्युतस्यादप्रतिष्ठिताआहुतयः स्युरप्रतिष्ठिताः स्तोमाअप्रतिष्ठितान्युक्थानि तिसृभिः प्रातःसवनेभिमृशति त्रिवृत् ( १ ) वा अग्निर्यावानेवाग्निस्तं युनक्ति यथानसियुक्तआधीयतएवमेव तत्प्रत्याहुतयस्तिष्ठंति प्रतिस्तोमाः प्रत्युक्थानि यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यामभिमृशत्येतावान्वै यज्ञोयावानग्निष्टोमोभूमात्वाअस्यातऊर्ध्वः क्रियते यावानेव यज्ञस्तमंततोन्वारोहति द्वाभ्यां प्रतिष्ठित्याएकया प्रस्तुतं भवत्यथ ( २ ) अभिमृशत्युपनमुत्तरोयज्ञोनमत्यथो संतत्यै प्रवाएषोस्माल्लोकाच्च्यवते योग्निं चिनुते नवा एतस्यानिष्टकआहुतिरवकल्पते यां वा एषोनिष्टकआहुतिं जुहोतिस्रवंतिवैसाताꣳस्रवन्तीं यज्ञोनुपराभवति यज्ञं यजमानोयत्पुनश्चितिं चिनुतआहुती-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नां प्रतिष्ठित्यै प्रत्याहुतयस्तिष्ठंति (३) न यज्ञः पराभवति नयजमानोऽष्टावुपदधात्यष्टाक्षरा गायत्री-
गायत्रेणैवैनं छंदसा चिनुते यदेकादशत्रैष्टुभेन यद्द्वादशजागतेन छंदोभिरेवैनं चिनुते नपात्को-
वैनामैषोऽग्निर्यत्पुनश्चितिर्यएवं विद्वान्पुनश्चितिंचिनुतआतृतीयात्पुरुषादन्नमत्ति यथा वै पुनराधे-
यएवं पुनश्चितिर्योऽग्न्याधेयेनन (४) ऋध्नोति सपुनराधेयमाधत्ते योऽग्निं चित्वानर्ध्नोतिसपुनश्चितिं
चिनुते यत्पुनश्चितिंचिनुतऋध्या अथो खल्वाहुर्नचेतव्येति रुद्रोवा एषयदग्निर्यथा व्याघ्रꣳसुप्तं
बोधयति तादृगेव तदथो खल्वाहुश्चेतव्येति यथावसीयाꣳसंभागधेयेन बोधयति तादृगेव तन्मनु-
रग्निमचिनुत ( ५ ) तेन नार्ध्नोत्सएतां पुनश्चितिमपश्यत्तामचिनुत तयावैसआर्ध्नोद्यत्पुनश्चितिं
चिनुतऋध्यै १७ ) [ त्रिवृदथतिष्ठंतिनाचिनुतसप्तदशच ] १० ॥ छंदश्चितं चिन्वीत पशु-
कामः पशवोवै छंदाꣳसि पशुमानेवभवतिश्येनचितं चिन्वीत सुवर्गकामः श्येनोवै वयसां पतिष्ठः
श्येनएव भूत्वा सुवर्गं लोकं पतति कंकचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिंल्लोके स्या-
मितिशीर्षण्वानेवामुष्मिंल्लोके भवत्यलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामश्चतस्रोदिशोदि-
क्ष्वेवप्रतितिष्ठति प्रउगचितं चिन्वीत भ्रातृव्यवान्प्र (१) एव भ्रातृव्यान्नुदतउभयतः प्रउगं चिन्वीत
यः कामयेत प्रजातान्भ्रातृव्यान्नुदेयप्रतिजनिष्यमाणानितिप्रैवजातान्भ्रातृव्यान्नुदते प्रतिजनि-
ष्यमाणान् रथचक्रचितं चिन्वीत भ्रातृव्यवान्वज्रोवै रथोवज्रमेव भ्रातृव्येभ्यः प्रहरति द्रोण-
चितं चिन्वीतान्नकामोद्रोणेवा अन्नं भ्रियते सयोन्येवान्नमवरुन्धे समूह्यं चिन्वीत पशुकामः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पशुमानेव भवति ( २ ) परिचाय्यं चिन्वीत ग्रामकामोग्राम्येव भवति श्मशानचितं चिन्वी-
तयः कामयेत पितृलोकंऋध्नुयामिति पितृलोकएवर्ध्नोति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धे-
तांसएताजमदग्निर्विहव्याअपश्यत्ताउपाधत्त ताभिर्वै सवसिष्ठस्येंद्रियं वीर्यमवृंक्तयद्विहव्याउप-
दधातींद्रियमेव ताभिर्वीर्यं यजमानोभ्रातृव्यस्य वृंक्ते होतुर्धिष्णियउपदधाति यजमानायतनं वै
( ३ ) होतास्वएवास्माआयतनइंद्रियं वीर्यमवरुंधे द्वादशोपदधाति द्वादशाक्षरा जगती जागताः पश-
वोजगत्यैवास्मै पशूनवरुंधेष्टावष्टावन्येषु धिष्णियेषूपदधात्यष्टाशफाः पशवः पशूनेवावरुंधे षण्मा-
र्जालीये षड्वा ऋतवऋतवः खलु वै देवाः पितरऋतूनेव देवान्पितॄन्प्रीणाति—४८ )
[ प्रभवतिवाअष्टाचत्वारिंशच्च ] ॥ ११ ॥ पवस्व वाजसातयइत्यनुष्टुक्प्रतिपद्भवति तिस्रो-
नुष्टुभश्चतस्रोगायत्रियोयत्तिस्रोनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति यच्चतस्रोगायत्रियस्तस्मा-
त्सर्वांश्चतुरः पदः प्रतिदधत्पलायते परमावाएषाछंदसांयदनुष्टुक्परमश्चतुष्टोमस्तोमानां परमस्त्रि-
रात्रोयज्ञानां परमोश्वः पशूनां परमेणैवैनं परमतां गमयत्येकविंशमहर्भवति ( १ ) यस्मि-
न्नश्वआलभ्यते द्वादशमासाः पञ्चर्तवस्त्रयइमे लोकाअसावादित्यएकविंशएष प्रजापतिः प्राजा-
पत्योश्वः तमेव साक्षादृध्नोति शक्वरयः पृष्ठं भवंत्यन्यदन्यच्छंदोन्येन्येवाएते पशवआलभ्यंत-
उतेवग्राम्याउतेवारण्यायच्छक्वरयः पृष्ठं भवंत्यश्वस्यसर्वत्वायपार्थुरश्मंब्रह्मसामं भवति रश्मिना
वा अश्वः ( २ ) यतईश्वरोवा अश्वोयतोप्रतिष्ठितः परां परावतं गंतोर्यत्पार्थुरश्मंब्रह्मसामं भव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्यश्वस्य यत्यै धृत्यै संकृत्यच्छावाकसामं भवत्युत्सन्नयज्ञोवा एषयदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वोवाक्रियते नवा सर्वइति यत्संकृत्यच्छावाकसामं भवत्यश्वस्य सर्वत्वायपर्याप्त्याअनंतरायाय- सर्वस्तोमोतिरात्रउत्तममहर्भवति ( ३ ) सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति —१० ) [ भवत्यश्वोभवतिदशच ]॥ १२॥ देवासुरा ( १११ ) ऋतव्या ( १८९ ) रुद्रो ( २३० ) श्म ( २४९ ) नृषद् ( २४० ) उत् ( ३१० ) प्राचीं ( ३७१ ) वसो ( २९९ ) र॒ग्निः ( २०२ ) सुवर्गाय ( २६७ ) छंदश्चितं ( १९८ ) पर्वस्व ( १६० ) द्वादश ( २९०६ )॥१२॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थःप्रपाठकः ॥

ॐम् यदेकेन सꣳस्थापयति यज्ञस्य संतत्याअविच्छेदायैंद्राः पशवोयेमुष्करायदैंद्राः संतोग्निभ्यआलभ्यंते देवताभ्यः समदं दधात्याग्नेयीस्त्रिष्टुभोयाज्यानुवाक्याः कुर्याद्यदाग्नेयी- स्तेनाग्नेयायत्रिष्टुभस्तेनैंद्राः समृध्यै न देवताभ्यः समदं दधाति वायवे नियुत्वतेतूपरमालभते ते- जोग्नेर्वायुस्तेजसएषआलभ्यते तस्माद्यद्वियङ्वायुः ( १ ) वाति तद्वियङ्ङग्निर्दहतिस्वमेव तत्तेजोन्वे- ति यन्न नियुत्वतेस्यादुन्माद्येद्यजमानोनियुत्वते भवति यजमानस्यानुन्मादायवायुमतीश्वेतवती याज्यानुवाक्येभवतः सतेजस्त्वाय हिरण्यगर्भः समवर्तताग्रइत्याघारमाघारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय सर्वाणि वा एषरूपाणि पशूनां प्रत्यालभ्यते यच्छ्मश्रुणस्त- त् (२) पुरुषाणाꣳरूपंयत्तूपरस्तदश्वानां यदन्यतोदन्तद्गवां यदव्याइव शफास्तदवीनां यदजस्तद-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जानां वायुर्वै पंशूनां प्रियं धाम यद्वायव्योभवत्येतमेवैनमभिसंजानानाः पशवउपंतिष्ठंते वाय-
व्यः कार्या३ः प्राजापत्या ३ इत्याहुर्यद्वायव्यं कुर्यात्प्रजापतेरियाद्यत्प्राजापत्यं कुर्याद्वायोः ( ३ )
इयाद्यद्वायव्यः पशुर्भवति तेनं वायोर्नैति यत्प्राजापत्यः पुरोडाशोभवति तेनं प्रजापतेर्नैति
यद्वादशकपालस्तेनं वैश्वानरान्नैत्याग्नावैष्णवमेकादशकपालं निर्वंपति दीक्षिष्यमाणोग्निः सर्वा-
देवता विष्णुर्यज्ञोदेवताश्चैव यज्ञंचारंभतेग्निरवमोदेवतानां विष्णुः परमोयदाग्नावैष्णवमेकादशक-
पालं निर्वपति देवताः ( ४ ) एवोभयतः परिगृह्य यजमानोवरुंधे पुरोडाशेनवै देवा अमुष्मिँ-
ल्लोक आर्ध्नुवञ्चरुणास्मिन्यःकामयेतामुष्मिँल्लोकमृध्नुयामिति सपुरोडाशं कुर्वीतामुष्मिन्नेवलोक
मृध्नोति यदष्टाकपालस्तेनाग्नेयोयत्रिकपालस्तेनं वैष्णवः समृध्यै यः कामयेतास्मिँल्लोकमृध्नु
यामिति सचरुंकुर्वीताग्नेर्घृतं विष्णोस्तंडुलास्तस्मात् ( ५ ) चरुःकार्योस्मिन्नेवलोकमृध्नो
त्यादित्यो भवतीयंवा अदितिरस्यामेव प्रतितिष्ठत्यथो अस्यामेवाधियज्ञं तनुते योवैसंवत्सर-
मुख्यमभृत्वाग्निं चिनुते यथा सामि गर्भोविपद्यते तादृगेव तदार्तिमार्छेद्वैश्वानरं द्वादशकपालं पु-
रस्तान्निर्वपेत्संवत्सरोवाअग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा ( ६ ) कालआगते विजायत एवमेव
संवत्सरमाप्त्वाकालआगते ऽग्निंचिनुते नार्तिमार्च्छत्येषावा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य
तनुवमवरुंधे त्रीण्येतानि हवींषि भवन्ति त्रयइमे लोकाएषां लोकानाꣳरोहाय—३८ [ वायुर्य-
द्वायोर्देवतास्तस्मादाप्त्वाष्टात्रिꣳशच्च ] ॥ १ ॥ प्रजापतिः प्रजाः सृष्ट्वा प्रेणानु प्राविशत्ताभ्यः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पुनः संभवितुं नाशक्नोत्सोऽब्रवीद्भववदित्सयोमेतः पुनः संचिनवदिति तं देवाः समचिन्वन्ततोवै तआर्ध्नुवन्यत्समचिन्वन्तच्चित्यस्य चित्यत्वं यएवं विद्वानग्निं चिनुतऋध्नोत्येव कस्मै कमग्निश्चीयत इत्याहुरग्निवान् (१) असानीति वा अग्निश्चीयतेग्निवानेव भवति कस्मै कमग्निश्चीयत इत्याहुर्देवामावेदन्निति वा अग्निश्चीयते विदुरेनं देवाः कस्मै कमग्निश्चीयत इत्याहुर्गृह्यसानीति वा अग्निश्चीयते गृह्येव भवति कस्मै कमग्निश्चीयत इत्याहुः पशुमानसानीति वा अग्निः (२) चीयतेपशुमानेव भवति कस्मै कमग्निश्चीयत इत्याहुः सप्तमापुरुषाउपजीवानिति वा अग्निश्चीयते त्रयः प्राञ्चस्त्रयः प्रत्यंचआत्मा सप्तमएतावंत एवैनममुष्मिँल्लोकउपजीवंति प्रजापतिरग्निमचिकीषत तं पृथिव्यब्रवीन्नमय्यग्निं चेष्यसेति माधक्ष्यति सात्वातिदह्यमाना विधविष्ये (३) सपापीयान्भविष्यसीति सोऽब्रवीत्तथा वा अहं करिष्यामि यथा त्वा नाति धक्ष्यतीति सइमामभ्यमृशत्प्रजापतिस्त्वासादयतु तया देवतयांगिरस्वद्ध्रुवासीदेतीमामेवेष्टकां कृत्वोपाधत्तानतिदाहाय यत्प्रत्यग्निं चिन्वीत तदभिमृशेत्प्रजापतिस्त्वासादयतु तया देवतयांगिरस्वद्ध्रुवासीद (४) इतीमामेवेष्टकां कृत्वोपधत्तेनतिदाहाय प्रजापतिरकामयत प्रजायेयेति सएतमुख्यमपश्यत्तꣳ संवत्सरमबिभस्ततोवै सप्राजायत तस्मात्संवत्सरं भार्यः प्रैवजायते तं वसवोब्रुवन्प्रत्वमजनिष्ठावयं प्रजायामहाइति तं वसुभ्यः प्रायच्छत्तं त्रीण्यहान्यबिभरुस्तेन (५) त्रीणि च शतान्यसृजंतत्रयस्त्रिꣳशतं च तस्मात्र्यहं भार्यः प्रैवजायते तान् रुद्राअब्रुवन्प्रयूयमजनिढ्ढं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वयं प्रजायामहाइति तꣳरुद्रेभ्यः प्रायच्छन्तꣳषडहान्यबिभरुस्तेन त्रीणि च शतान्यसृजंत त्रयं-स्त्रिꣳशतं च तस्मात्षडहं भार्यः प्रैवजायते तानादित्याअब्रुवन्प्रयूयमजनिढ्वं वयम् ( ६ ) प्रजा-यामहाइति तमादित्येभ्यः प्रायच्छन्तं द्वादशाहान्यबिभरुस्तेन त्रीणि च शतान्यसृजंत त्रयस्त्रिꣳ-शतं च तस्माद्द्वादशाहं भार्यः प्रैव जायते तेन वैतेसहस्रमसृजंतोखाꣳसहस्रतमीं यएव मुख्यꣳ साह-स्रं वेद प्रसहस्रं पशूनाप्नोति—४०) अग्निवानग्निर्धविष्ण्येसीदतेनवयंचत्वारिꣳशच्च ॥२॥ यजुषा वा एषाक्रियते यजुषा पच्यते यजुषा विमुच्यते यदुखासावा एषैतर्हि यातयाम्नीसा न पुनः प्रयुज्ये-त्याहुरग्नेयुक्ष्वाहिये तवयुक्ष्वाहि देवहूतमाꣳ इत्युखायां जुहोति तेनैवैनां पुनः प्रयुंक्ते तेनायात-याम्नीयोवा अग्नि योगआगते युनक्ति युंक्तेयुंजानेष्वग्ने ( १ ) युक्ष्वाहि येतव युक्ष्वाहि देवहूत-माꣳ इत्याहैषवा अग्नेर्योगस्तेनैवैनं युनक्ति युंक्ते युंजानेषु ब्रह्मवादिनोवदंति न्यंङ्ङग्निश्चेतव्या ३ उत्ताना ३ इति वयसां वा एषप्रतिमया चीयते यदग्निर्यन्यंचं चिनुयात्पृष्टित एनमाहुतयऋ-च्छेयुर्यदुत्तानं नपतितुꣳ शक्नुयादसुवर्ग्योस्य स्यात्प्राचीनमुत्तानम् ( २ ) पुरुषशीर्षमुपदधाति मुखत एवैनमाहुतयऋच्छंति नोत्तानं चिनुते सुवर्ग्योस्य भवति सौर्याजुहोति चक्षुरेवास्मिन्प्र-तिदधाति द्विर्जुहोति द्वेहि चक्षुषी समान्याजुहोति समानꣳहि चक्षुः समृध्यै देवासुराः संय-त्ताआसन्ते वामं वसु संन्यदधत तद्देवावामभृतावृंजत तद्वामभृतोवामभृत्त्वं यद्वामभृतम् ( ३ ) उपदधाति वाममेव तया वसु यजमानोभ्रातृव्यस्य वृंक्ते हिरण्यमूर्ध्नीभवति ज्योतिर्वै हिरण्यं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्योतिर्वाृमं ज्योतिषैवास्य ज्योतिर्वाृमं वृंक्ते द्वियजुर्भवति प्रतिष्ठित्यै—२४ ) [ अग्नउत्तानं-वांमुभूतंचतुर्विꣳशतिश्च ] ॥ ३ ॥ आपोवरुणस्य पत्नंयआसन्ताअग्निरभ्यंध्यायत्ताः समंभ-वृत्तस्य रेतः परापतत्तदियमंभवद्यद्द्वितीयं परापंतत्तदसावंभवदियं वै विराडसौ स्वराड्यद्विराजा-वुपदधातीमे एवोपंधत्ते यद्वा असौ रेतःसिंचति तदस्यां प्रतितिष्ठति तत्प्रजायते ताओषंधयः ( १ ) वीरुधोभवंति ताअग्निरत्ति यएवं वेद् प्रैव जायतेन्नादोभवति योरेतस्वीस्यात्प्रथमायां त-स्य चित्यामुभे उपंदध्यादिमे एवास्मै समीचीरेतः सिंचतोयः सिक्तरेताः स्यात्प्रथमायां तस्यचि-त्यामन्यामुपंदध्यादुत्तमायामन्याꣳ रेतएवास्य सिक्तमाभ्यामुभयतः परिगृह्णाति संवत्सरं नकम् ( २ ) चन प्रत्यवरोहेन्नहीमेकं चन प्रत्यवरोहतस्तदेनयोर्व्रतं योवा अपंशीर्षाणमग्निं चिनुतेऽपशीर्षा मुष्मिँल्लोके भंवति यः सशीर्षाणं चिनुते सशीर्षामुष्मिंल्लोके भंवति चित्तिं जुहोमि मनसा घृतेन यथा देवाइहागमन्वीतिहोत्राऋतावृधः समुद्रस्य वयुनस्य पत्मंजुहोमि विश्वकर्मणे विश्वाहामर्त्यꣳ हविरिति स्वयमातृण्णामुपधायंजुहोति (३) एतद्वा अग्नेः शिरः सशीर्षाणमेवाग्निं चिनुते सशीर्षामु-ष्मिँल्लोके भवति यएवं वेदसुवर्गाय वा एषलोकाय चीयते यदग्निस्तस्य यदयंथापूर्वं क्रियते सुव-र्ग्यमस्य तत्सुवर्ग्योग्निश्चितिमुपधायाभिमृशेच्चित्तिमचित्तिं चिनवद्विविद्वान्पृष्ठेववीतावृजिनाच-मर्ताश्राये चंनः स्वपत्याय ( ४ ) देवदितिं च रास्वादितिमुरुष्येति यथापूर्वमेवैनामुपंधत्ते प्रांचमेनं चिनुते सुवर्ग्योस्य भवति—१८ ) [ ओषंधयः कंजुहोतिस्वपत्यायाष्टादशच ] ॥ ४ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विश्वकर्मा दिशां पतिः सनः पशून्पातु सोऽस्मान्पातु तस्मै नमः प्रजापतीरुद्रोवरुणोऽग्निर्दिशां पतिः सनः पशून्पातु सोऽस्मान्पातु तस्मै नम एतावै देवताएतेषां पशूनामधिपतयस्ताभ्योवा एषआवृश्च्यते यः पशुशीर्षाण्युपदधातिहिरण्येष्टकाउपदधात्येताभ्यएव देवताभ्योनमस्करोति ब्रह्मवादिनः ( १ ) वदंत्यग्नौ ग्राम्यान्पशून्प्रदधाति शुचारण्यानर्पयति किंततउच्छिꣳषतीति यद्धिरण्येष्टकाउपदधात्यमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्योभेषजं करोति नैनान्हिनस्ति प्राणोवै प्रथमास्वयमातृण्णा व्यानोद्वितीयापानस्तृतीयानुप्राण्यात्प्रथमाꣳ स्वयमातृण्णामुपधाय प्राणेनैव प्राणꣳ समर्धयति व्यन्यात् ( २ ) द्वितीयामुपधाय व्यानेनैव व्यानꣳ समर्धयत्यपान्यात्तृतीयामुपधायापानेनैवापानꣳ समर्धयत्यथो प्राणैरेवैनꣳ समिन्धे भूर्भुवः सुवरिति स्वयमातृण्णा उपदधातीमे वै लोकाः स्वयमातृण्णाएताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायतयदेताभिर्व्याहृतीभिः स्वयमातृण्णाउपदधाती मानेव लोकानुपधायैषु ( ३ ) लोकेष्वधिप्रजायते प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाꣳगिरस्वद्ध्रुवासीदाग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन्तेनपतितुं नाशक्नुवन्त एताश्चतस्रः स्वयमातृण्णाअपश्यं तादिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन्यच्चतस्रः स्वयमातृण्णादिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः (४) सुवर्गं लोकमेति — ३ ) [ ब्रह्मवादिनोन्यादेषुयजमानस्त्रीणिच ] ॥ ५ ॥ अग्नआयाहि वीतय इत्याहहूत्वैवैनमग्निं दूतं वृणीमहइत्याह हूत्वैवैनं वृणीतेग्निनाग्निः समिध्यत इत्याह समिधएवैनम-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ग्निर्वृत्राणि जंघनदित्याह समिंद्धएवास्मिन्निन्द्रियं दधात्यग्नेः स्तोमं मनामहइत्याह मनुतएवैनमेतानि
वा अह्नां रूपाणि (१) अन्वहमेवैनं चिनुते वाह्नां रूपाणि रुंधे ब्रह्मवादिनोवदंति कस्मात्सत्या-
द्यातयाम्नीरन्याइष्टका अयातयाम्नी लोकंपृणेत्यैंद्राग्नी हि बार्हस्पत्येति ब्रूयादिंद्राग्नी च हि देवानां
बृहस्पतिश्चायातयामानोनुचरवंती भवत्यजामित्वायानुष्टुभानुचरत्यात्मा वै लोकंपृणाप्राणोनुष्टुप्त-
स्मात्प्राणः सर्वाण्यंगान्यनुचरतिताअंस्य सूदंदोहसः (२) इत्याह तस्मात्परुंषिपरुषि रसः सोमंश्री
णंति पृश्नयइत्याहान्नं वैपृश्न्यन्नमेवावरुंधेर्कोवा अग्निरर्कोन्नमन्नमेवावरुंधे जन्मन्देवानां विशंस्त्रि-
ष्वारोचने दिवइत्याहिमानेवास्मैं लोकान् ज्योतिष्मतःकरोति योवा इष्टकानां प्रतिष्ठां वेद प्रत्येवतिष्ठ
तितया (३) देवतयांगिरस्वद्ध्रुवासीदेत्याहैषा वा इष्टकानां प्रतिष्ठा यएवं वेद प्रत्येवतिष्ठति — १६ )
· रूपाणिसूदंदोहसस्तयाषोडशच ] ॥ ६ ॥ सुवर्गाय वा एषलोकाय चीयते यदग्निर्वज्रएकादशिनी
यदग्नावेकादशिनीं मिनुयाद्वज्रेणैनं सुवर्गाल्लोकादंतर्दध्याद्यन्नमिनुयात्स्वरुभिः पशून्व्यर्धयेदेकयूपं
मिनोति नैनं वज्रेण सुवर्गाल्लोकादंतर्दधाति न स्वरुभिः पशून्व्यर्धयति विवा एषइंद्रियेण वीर्ये
णर्ध्यते योग्निं चिन्वन्नधिक्रामत्यैंद्रिया (१) ऋचाक्रमणं प्रतीष्टकामुपदध्यान्नेंद्रियेण वीर्येण
व्यृध्यते रुद्रोवा एषयदग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्योवा एषआवृश्च्यते योग्निं
चिनुतेग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्यएवनमस्करोत्यथो ताभ्यएवात्मानं नि-
ष्क्रीणीते यत्ते रुद्रपुरः ( २ ) धनुस्तद्वातोअनुवातु ते तस्मै ते रुद्रसंवत्सरेण नमस्करोमि यत्ते

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रुद्र दक्षिणाधनुस्तद्वातोअनुवातुते तस्मै ते रुद्र परिवत्सरेण नमस्करोमि यत्ते रुद्र पश्चाद्धनुस्तद्वातोअनुवातुते तस्मै ते रुद्रेदावत्सरेण नमस्करोमिरुद्रोत्तराद्धनुस्तत्. ( ३ ) वातोअनुवातुते तस्मै ते रुद्रेदुवत्सेरण नमस्करोमि यत्ते रुद्रोपरिधनुस्तद्वातोअनुवातुते तस्मै ते रुद्र वत्सरेण नमस्करोमि रुद्रोवा एषयदग्निः सयथा व्याघ्रः क्रुद्धस्तिष्ठंत्येवं वा एषएतर्हि संचितमेतैरुपतिष्ठते नमस्कारैरेवैनं शमयति येग्नयः ( ४ ) पुरीष्याः प्रविष्टाः पृथिवीमनुतेषां त्वमस्युत्तमः प्रणोजीवातवे सुव । आपं त्वाग्ने मनसापं त्वाग्ने तपसापंत्वाग्ने दीक्षयापंत्वाग्नउपसद्भिरापं त्वाग्ने सुत्ययापंत्वाग्ने दक्षिणाभिरापं त्वाग्नेवभृथेनापं त्वाग्ने वशयापं त्वाग्ने स्वगाकारेणेत्याह ( ५ ) एषा वा अग्नेरासिस्तयैवैनमाप्नोति —८) [ ऐन्द्रियापुरस्तदग्नयंआहाष्टौच ] ॥ ७ ॥

गायत्रेण पुरस्तादुपतिष्ठते प्राणमेवास्मिन्दधाति बृहद्रथंतराभ्यां पक्षावोजएवास्मिन्दधात्यृतुस्थायज्ञायज्ञियेन पुच्छमृतुष्वेव प्रतितिष्ठति पृष्ठैरुपतिष्ठते तेजोवै पृष्ठानि तेजएवास्मिन्दधाति प्रजापतिरग्निमसृजत सोस्मात्सृष्टः पराङैत्तं वारवंतीयेनावारयत तद्वारवंतीयस्य वारवंतीयत्वꣳ श्यैतेन श्येतीअंकुरुत तच्छ्येतस्य श्यैतत्वम् ( १ ) यद्वारवंतीयेनोपतिष्ठते वारयतएवैनꣳ श्यैतेन श्येतीकुरुते प्रजापतेर्हृदयेनापिपक्षं प्रत्युपतिष्ठते प्रेमाणमेवास्य गच्छति प्राच्या त्वा दिशा सादयामि गायत्रेणछंदसाग्निना देवतयाग्नेः शीर्ष्णाग्नेः शिरउपदधामि दक्षिणया त्वा दिशा सादयामि त्रैष्टुभेन छंदसेंद्रेण देवतयाग्नेः पक्षेणाग्नेः पक्षमुपदधाति प्र-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तीच्यां त्वा दिशा सादयामि ( २ ) जागतेन छंदसा सवित्रा देवतयाग्नेः पुच्छेनाग्नेः पुच्छमुपदधाम्युदीच्या त्वा दिशा सादयाम्यानुष्टुभेन छंदसा मित्रावरुणाभ्यां देवतयाग्नेः पक्षेणाग्नेः पक्षमुपदधाम्यूर्ध्वया त्वा दिशा सादयामि पांक्तेन छंदसा बृहस्पतिना देवतयाग्नेः पृष्ठेनाग्नेः पृष्ठमुपदधामि योवा अपात्मानमग्निं चिनुतेपात्मामुष्मिँल्लोके भवति यः सात्मानं चिनुते ( ३ ) सात्मामुष्मिँल्लोके भवत्यात्मेष्टकाउपदधात्येषवा अग्नेरात्मा सात्मानमेवाग्निं चिनुते सात्मामुष्मिंल्लोके भवति यएवं वेद — २२ ) [ श्यैतत्वꣳ सादयामि चिनुते द्वाविꣳशतिश्च ] ॥ ८ ॥ अग्नउदधे यातइषुर्युवानाम तया नोमृड तस्यास्ते नमस्तस्यास्त उपजीवंतोभूयास्माग्ने दुध्रगह्यकिꣳशिलवन्यूयातइषुर्युवानाम तया नोमृड तस्यास्ते नमस्तस्यास्तउपजीवंतोभूयास्म पंच वा एते ग्नयोयच्चितयउदधिरेव नाम प्रथमोदुध्रः ( १ ) द्वितीयोगह्यस्तृतीयः किꣳशिलश्चतुर्थोवन्यः पंचमस्तेभ्योयदाहुतीर्न जुहुयादध्वर्युं च यजमानं च प्रदहेयुर्यदेताआहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नार्तिमार्छत्यध्वर्युर्न यजमानोवाङ्मआसन्नसोः प्राणोक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमुरुवोरोजोरिष्टाविश्वान्यंगानि तनूः ( २ ) तनुवा मे सह नमस्ते अस्तु मा माहिꣳसीरप वा एतस्मात्प्राणाः क्रामंति योग्निं चिन्वन्नधिक्रामति वाङ्मआसन्नसोः प्राणइत्याह प्राणानेवात्मंधत्ते योरुद्रोअग्नौ योअप्सु यओषधीषु योरुद्रोविश्वा भुवना विवेश तस्मै रुद्राय नमोअस्त्वाहुतिभागावा अन्ये रुद्राहविर्भागाः ( ३ ) अन्ये शतरुद्रीयꣳ हुत्वा गावीधुकं चरुमेतेन यजु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



षा चरमायामिष्टकायां निदंध्याद्भागधेयेनैवैनं शमयति तस्यत्वैशतरुद्रीयं हुतमित्याहुर्यस्यै-तदग्नौ क्रियतइति वसवस्त्वा रुद्रैः पुरस्तात्पांतु पितरस्त्वायमराजानः पितृभिर्दक्षिणतः पांत्वा-दित्यास्त्वा विश्वैर्देवैः पश्चात्पांतु द्युतानस्त्वामारुतोमरुद्भिरुत्तरतः पातु ( ४ ) देवास्त्वेंद्रज्येष्ठा-वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पांतु नवा एतेन पूतोन मेध्योन प्रोक्षितोयदेनमतः प्राचीनं प्रो-क्षति यत्संचितमाज्येन प्रोक्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः—३२ ) [ बुध्रस्तनूर्हविर्भागाः पातुद्वात्रिंशच्च ] ॥ ९ ॥ समीचीनामासि प्राची दिक्तस्यांस्तेग्निरधिपतिरसितोरक्षिता यश्चाधि-पतिर्यश्चगोप्ता ताभ्यां नमस्तौ नोमृडयतां तेयं द्विष्मोयश्चनोद्वेष्टि तं वां जंभे दधाम्योजस्विनी-नामासि दक्षिणादिक्तस्यांस्तइंद्रोधिपतिः पृदाकुः प्राचीनामासि प्रतीचीदिक् तस्यांस्ते ( १ ) सोमोधिपतिः स्वजोवस्छावानामास्युदीचीदिक्तस्यांस्ते वरुणोधिपतिस्तिरश्चराजिरधिपत्नीनामा-सि बृहतीदिक्तस्यांस्ते बृहस्पतिरधिपतिः श्वित्रोवशिनीनामासीयं दिक्तस्यांस्ते यमोधिपतिः क-ल्माषग्रीवोरक्षिता यश्चाधिपतिर्यश्चगोप्ता ताभ्यां नमस्तौ नोमृडयतां तेयं द्विष्मोयश्च ( २ ) नो द्वेष्टितं वां जंभे दधाम्येतावै देवताअग्निं चितंरक्षंति ताभ्योयदाहुतीर्न जुहुयादध्वर्युं च यज-मानं च ध्यायेयुर्यदेताआहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नार्तिमार्छत्यध्वर्युर्न यजमानोहेत-योनामस्छ तेषां वः पुरोगृहाअग्निर्वइषवः सलिलोनिलिंपानाम ( ३ ) स्थ तेषां वोदक्षिणागृहाः पितरोवइषवः सगरोवज्रिणोनामस्थ तेषां वः पश्चाद्गृहाः स्वमोवइषवोगह्वरोवस्थावानोनामस्थ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तेषां वउत्तराद्गृहाआपोवइषवः समुद्रोधिपतयोनामस्थ तेषां वउपरिगृहावर्षं वइषवोवस्वान्कव्या-
नामस्थ पार्थिवास्तेषां वइह गृहाः (४) अन्नं वइषवोनिमिषोवातनामं तेभ्योवोनमस्तेनो-
मृडयंत तेयं द्विष्मोयश्चनोद्वेष्टि तं वोजंभे दधामिहुतादोवा अन्ये देवाअहुतादोन्येतानग्निचिद्देवो-
भयान्प्रीणाति दध्ना मधुमिश्रेणैताआहुतीर्जुहोति भागधेयेनैवैनान्प्रीणात्यथो खल्वाहुरिष्टकावैदेवा-
अहुतादइति (५) अनुपरिक्रामं जुहोत्यपरिवर्गमेवैनान्प्रीणातीमꣳ स्तनमूर्जस्वंतंधयापां प्रप्यातमग्ने
सरिरस्य मध्ये। उत्संजुषस्व मधुमंतमूर्वसमुद्रियꣳ सदनमाविशस्व। योवा अग्निं प्रयुज्यन विमुंचति
यथाश्वोयुक्तोविमुच्यमानः क्षुध्यन्पराभवत्येवमस्याग्निः पराभवति तं पराभवंतं यजमानोनुपरा-
भवति सोग्निं चित्वालूक्षः (६) भवतीमꣳ स्तनमूर्जस्वंतं धयापामित्याज्यस्य पूर्णाꣳस्रुचं जुहोत्येष
वाअग्नेर्विमोकोविमुच्यैवास्माअन्नमपिदधाति तस्मादाहुर्यश्चैवं वेद यश्चन सुधायꣳ हवै वाजी
सुहितोदधातीत्यग्निर्वाव वाजी तमेव तत्प्रीणाति सएनं प्रीतः प्रीणाति वसीयान्भवति (७)
(तेचनामगृहाइतिलूक्षोभवति) ॥ १० ॥ इंद्राय राज्ञे सूकरोवरुणाय राज्ञे कृष्णोयमाय राज्ञऋश्य
ऋषभाय राज्ञे गवयः शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः क्षिप्रश्येनस्यवर्तिका नीलंगोः क्रि-
मिः सोमस्य राज्ञः कुलुंगः सिंधोः शिꣳशुमारोहिमवतोहस्ती — २८ ) ( इंद्रायाष्टाविꣳशतिः )
॥ ११ ॥ मयुः प्राजापत्यऊलोहलीक्ष्णोवृषदꣳशस्ते धातुः सरस्वत्यै शारिः श्येतापुरुषवाक्स-
रस्वतेशुकः श्येतः पुरुषवागारण्योजोनकुलः शका ते पौष्णावाचेक्रौंचः — २३ ) ( मयुस्त्रयोविꣳ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शतिः ) ॥ १२ ॥ अपांनप्त्रैजषोनाक्रोमकंरः कुलीकयस्तेकूंपारस्य वाचे पैंगराजोभगाय कुषी-
तंकआतीवाहसोदर्विदातेवायव्यादिग्भ्यश्चक्रवाकः— १९ ) [ अपामेकान्नविंशतिः ] ॥ १३ ॥
बलांयाजगरआखुः सृंजयाशयंडकस्ते मैत्रा मृत्यवे सितोमन्यवे स्वजः कुंभीनसः पुष्करसादो-
लौहिताहिस्ते त्वाष्ट्राः प्रतिश्रुत्कांयै वाहसः— १८ [ बलांयाष्टादश ] ॥ १४ ॥ पुरुषमृगश्चंद्र-
मसे गोधा कालंका दार्वाघाटस्ते वनस्पतींनामेण्यहे कृष्णोरात्रियै पिकः क्ष्विंका नीलंशीर्ष्णी तैर्य-
म्णे धातुः कत्कटः— ३८ ) [ पुरुषमृगोष्टादश ]॥१५॥ सौरी बलाकश्यैंमयूरंश्येनस्ते गंधर्वाणां वसू
नां कपिंजलोरुद्राणां तित्तिरी रोहित्कुंण्डणाचीं गोलत्तिकाताअंप्सरसामरंण्याय सृमरः — १८ )
[ सौर्यष्टादश ] ॥ १६ ॥ पृषतोवैश्वदेवः पित्वोन्यंकुः कशस्तेनुमत्या अन्यवापोर्धमासानां मासां
कश्यपः कयिः कुटरुंर्दात्यौहस्तेसिनीवाल्यै बृहस्पतंये शित्पुटः— १८ ) [ पृषतोष्टादश ] ॥ १७ ॥
शकां भौमी पांत्रः कशोमांथीलवस्तेपितृणामृतूनां जहंका संवत्सराय लोपां कपोतउलूकः
शशस्ते नैर्ऋताः कंकवाकुः सावित्रः— १८ ) [ शकाष्टादश ] ॥ १८ ॥ रुरूरौद्रः कंकलासः
शकुनिः पिप्यंका ते शरव्यांयै हरिणोमारुतोब्रह्मणे शार्गस्तरक्षुः कृष्णः श्वाचंतुरक्षोगर्दभस्तइ-
तरजनानांमग्नये धूंक्ष्णा — २० ) [ रुरुर्विंशतिः ] ॥ १९ ॥ अलजआंतरिक्षउद्रोमद्गुः
प्लवस्ते पामदित्यै हंससाचिरिंद्राण्यै कीशागृध्रः शितिकक्षी वार्ध्राणसस्ते दिव्याद्यांवापृथिव्याः
श्वावित्— १८ ) [ अलजोष्टादश ] ॥ २० ॥ सुपर्णः पार्जन्योहंसोवृकोवृषदंशस्तऐंद्रा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अपामुद्रोर्यम्णे लोपाशः सिꣳहोनकुलोव्याघ्रस्ते महेंद्राय कामाय परस्वान्—१८) [ सुपर्णोष्टादश ]· ॥ २१ ॥ आग्नेयः कृष्णग्रीवःसारस्वतीमेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठोबार्हस्पत्यः शिल्पोवैश्वदेवऐंद्रोरुणोमारुतः कल्माषऐंद्राग्नः सꣳहितोधोरामः सावित्रोवारुणः पेत्वः—२२) [ आग्नेयोद्वाविꣳशतिः] ॥२२॥ अश्वस्तूपरोगोमृगस्ते प्राजापत्याआग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोम शसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरः सौर्योबलक्षः पेत्वः—१६)[अश्वःषोडश] ॥ २३ ॥ अग्नयेनीकवते रोहितांजिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशंगौ तूपरौ मारुतः कल्माषआग्नेयः कृष्णोजः सारस्वती मेषी वारुणः कृष्ण एकशितिपात्पेत्वः—२२ )[ अग्नयेद्वाविꣳशतिः ] ॥ २४ ॥ यत् ( ३३८ ) प्रजापति ( ३४० ) यजुषा (१७४) पो ( २६८ ) विश्वकर्मा ( २०३ ) ग्ने ( १६६ ) सुवर्गाय ( २५८ ) गायत्रेणा ( १७२ ) ग्ने ( २३२ ) समीचीं ( ३५० ) द्राय ( २८ ) मयु ( २३ ) रुपां ( १९ ) वलाय ( १८ ) पुरुषमृगः ( १८ ) सौरी ( १८ ) पृषतः ( १८ ) शका ( १८ ) रुरु ( २० ) रलजः ( १८ ) सुपर्ण ( १८ ) आग्नेयो ( २२ ) श्वो ( १६ ) ग्नये ( २२ ) चतुर्विꣳशतिः ( २७२७ ) इतितैत्तिरीयसंहितायां पंचमकांडे पंचमःप्रपाठकः

ॐम् हिरण्यवर्णाः शुचयः पावकायासु जातः कश्यपोयास्विंद्रः । अग्निं यागर्भं दधिरे विरूपास्तानआपः शꣳ स्योनाभवंतु । यासाꣳ राजा वरुणोयाति मध्ये सत्यानृते अवपश्यञ्जना-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नाम्॥मधुश्चुतः शुचयोयाः पावकास्तानआपः शꣳस्योनाभवन्तु। यासां देवादिवि कृण्वंति भक्षं याअंतरिक्षे बहुधा भवंति।याः पृथिवीं पयसोन्दन्ति ( १ ) शुक्रास्तानआपः शꣳस्योनाभवंतु। शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोपस्पृशत त्वचं मे। सर्वाꣳ अग्नीꣳ रप्सुषदोहुवे वोमयि वर्चोबलमोजोनिधत्त। यददः संप्रयतीरहावनदताहते। तस्मादानद्योनाम स्थ तावोनामानि सिंधवः। यत्प्रेषितावरुणेन ताः शीभꣳ समवल्गत (२)। तदाप्नोदिन्द्रोवोयतीस्तस्मादापोअनुस्थन। अपकामꣳ स्यंदमानाअवीवरत वोहिकम्। इन्द्रोवः शक्तिभिर्देवीस्तस्माद्वार्णामवोहितम्। एको-देवोअप्यतिष्ठत्स्यंदमानायथा वशम्। उदानिषुर्महीरिति तस्मादुदकमुच्यते। आपोभद्राघृतमिदा-पआसु रग्नीषोमौ बिभ्रत्यापइत्ताः। तीव्रोरसोमधुपृचाम्( ३ ) अरंगमआमाप्राणेन सह वर्च-सागन्। आदित्पश्याम्युत वा शृणोम्यामाघोषोगच्छति वाङ्न आसाम्। मन्ये भेजानोअमृतस्य तर्हि हिरण्यवर्णाअतृपं यदावः। आपोहिष्ठामयोभुवस्तानऊर्जे दधातन। महे रणाय चक्षसे। योवः शिवतमोरसस्तस्य भाजयतेह नः। उशतीरिव मातरः। तस्माअरंगमाम वोयस्य क्षयायजिन्वथाआपोजनयथाचनः। दिविश्रयस्वान्तरिक्षे यतस्व पृथिव्यासंभव ब्रह्मवर्चसमसि ब्रह्मवर्चसायत्वा—२२ ) [ उदंति समवल्गतमधुपृचां मातरोद्वाविꣳशतिश्च ] ॥ १ ॥

अपां ग्रहान् गृह्णात्येतद्वा व राजसूयं यदेते ग्रहाः सर्वोग्निर्वै रुणसवोराजसूयम् अग्निसवश्चित्यस्ता-भ्यामेव सूयते थो उभावेव लोकावभिजयति यश्च राजसूयेन जानस्य यश्चाग्निचितआपो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भवन्त्यापोवा अग्नेर्भ्रातृव्यायदपोग्नेरधस्तादुप दधाति भ्रातृव्याभिभूत्यै भवंत्यात्मना परास्य भ्रातृव्योभवत्यमृतम् ( १ ) वा आपस्तस्मादद्भिरवतां तमभिषिंचंति नार्तिमार्छति सर्वमायुरेति यस्यैताउपधीयंते यउचैनाएवं वेदान्नं वा आपः पशवआपोन्नं पशवोन्नादः पशुमान् भवति यस्यैताउपधीयंते यउचैनाएवं वेद द्वादशभवन्ति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै ( २ ) अन्नमवरुन्धे पात्राणि भवन्ति पात्रे वा अन्नमद्यते सयोन्येवान्नमवरुन्धआद्वादशात्पुरुषादन्नमत्यथो पात्रान्नछिद्यते यस्यैताउपधीयंतेयउचैनाएवं वेद कुंभाश्च कुंभीश्च मिथुनानि भवंति मिथुनस्य प्रजात्यै प्रप्रजया पशुभिर्मिथुनैर्जायते यस्यैताउपधीयन्ते यउ ( ३ ) चैनाएवं वेद शुग्वा अग्निः सोध्वर्युं यजमानं प्रजाः शुचार्पयति यदपउपदधाति शुचमेवास्य शमयति नार्तिमार्छत्यध्वर्युर्न यजमानः शाम्यंन्ति प्रजायत्रैताउपधीयन्तेपां वा एतानि हृदयानि यदेताआपोयदेताअपउपदधाति दिव्याभिरेवैनाः सꣳसृजति वर्षुकः पर्जन्यः ( ४ ) भवति योवा एतासामायतनं कृप्तिं वेदायतनवान् भवति कल्पते स्माअनुसीतमुपदधात्येतद्वा आसामायतनमेषा कृप्तिर्यएवं वेदायतनवान् भवति कल्पतेस्मैद्वन्द्वमन्याउपदधाति चतस्रोमध्ये धृत्याअन्नं वा इष्टकाएतत्खलु वै साक्षादन्नं यदेषचरुर्यदेतं चरुमुपदधाति साक्षात् ( ५ ) एवास्माअन्न मवरुन्धे मध्यतउपदधाति मध्यतएवास्माअन्नं दधाति तस्मान्मध्यतोन्नमद्यते बार्हस्पत्योभवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्माअन्नमवरुन्धे ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्याह तेजस्वी ब्रह्मवर्चसी भवतियस्यैषउपधीयते यउचैनमेवं वेद—४७ ) ( अमृतमस्माउप-
र्जन्यः साक्षात्सप्तचत्वारिꣳशच्च ) ॥ २ ॥ भूतेष्टकाउपदधात्यत्रात्रवै मृत्युर्जायते यत्रयत्रैव
मृत्युर्जायते ततएवैनमव यजते तस्मादग्निचित्सर्वमायुरेति सर्वेह्यस्य मृत्यवोवेष्टास्तस्मादग्निचिन्ना
भिचरितवै प्रत्यगेनमभिचारः स्तृणुते सूयते वा एषयोऽग्निं चिनुते देवसुवामेतानि हवीꣳषिभवन्त्ये-
तावन्तोवै देवानाꣳ सवास्तएव ( १ ) अस्मै सवान् प्रयच्छान्ति तएनꣳ सुवन्ते सवोऽग्निर्वरुणसवोरा
जसूयं ब्रह्मसवश्चित्योदेवस्य त्वा सवितुः प्रसवइत्याह सवितृप्रसूतएवैनं ब्रह्मणादेवताभिरभिषिंचत्य-
न्नस्यान्नस्याभिषिंचत्यन्नस्यान्नस्यावरुध्यै पुरस्तात्प्रत्यंचमभिषिंचति पुरस्ताद्धिप्रतीचीन्नमद्यते
शीर्षतोभिषिंचति शीर्षतोह्यन्नमद्यतआमुखादन्ववस्रावयति (२) मुखतएवास्माअन्नाद्यं दधात्यग्ने
स्त्वासाम्राज्येनाभिषिंचामीत्याहैषवा अग्नेः सवस्तेनैवैनमभिषिंचति बृहस्पतेस्त्वासाम्राज्येना
भिषिंचामीत्याह ब्रह्मवैदेवानांबृहस्पतिर्ब्रह्मणैवैनमभिषिंचतीन्द्रस्यत्वा साम्राज्येनाभिषिंचामीत्या
हेंद्रियमेवास्मिन्नुपरिष्टाद्दधात्येतत् (३) वै राजसूयस्य रूपं यएवं विद्वानग्निं चिनुतउभावेव लोकाव-
भिजयतियश्च राजसूयेनेजानस्य यश्चाग्निचितऽइंद्रस्य सुषुवाणस्य दशधेंद्रियं वीर्यं परापतत्तदे-
वाः सौत्रामण्यासमभरन्त्सूयते वा एषऽयोऽग्निं चिनुतेऽग्निंचित्वासौत्रामण्यायजतेंद्रियमेववीर्यꣳसं-
भृत्यात्मन्धत्ते—४८ ) [ एवान्ववस्रावयत्येतदष्टाचत्वारिꣳशच्च ] ॥ ३ ॥ सजूरब्दो
यावभिः सजूरुषाअरुणीभिः सजूः सूर्यएतशेन सजोषावश्विना दꣳसोभिः सजूरग्निर्वै-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्वानरइडाभिर्घृतेन स्वाहा संवत्सरोवा अब्दोमासाअर्यावा उषाअरुणीसूर्यएतंशइमे अश्विना संवत्सरोऽग्निर्वैश्वानरः पशवइडापशवोघृत९ संवत्सरं पशवोनुप्रजायन्ते संवत्सरेणैवास्मै पशून्प्रजनयतिदर्भस्तंबे जुहोति यत् (१)वा अस्याअमृतं यद्वीर्यं तद्दर्भास्तस्मिन्जुहोति प्रैव जायते न्नादोभवति यस्यैवं जुहत्येतावैदेवता अग्नेः पुरस्ताद्भागास्ताएव प्रीणात्यथो चक्षुरेवाग्नेः पुरस्तात्प्रतिदधात्यनंधोभवतिय एवं वेदापोवाइदमग्रे सलिलमासीत्सप्रजापतिः पुष्करपर्णे वातोभूतोलेलायत्सः (२) प्रतिष्ठान्नाविंदत सएतदपां कुलायमपश्यत्तस्मिन्नग्निमचिनुत तदियमभवत्ततोवै सप्रत्यतिष्ठद्यां पुरस्तादुपादधात्तच्छिरोभवत्साप्राची दिग्यांदक्षिणत उपादधात्सदक्षिणः पक्षोभवत्सादक्षिणादिग्यां पश्चादुपादधात्तत्पुच्छमभवत्साप्रतीचीदिग्यामुत्तरतउपादधात् ( ३ ) सउत्तरःपक्षोभवत् सोदीचीदिग्यामुपरिष्टादुपादधात्तत्पृष्ठमभवत्सोर्ध्वादिगियंवा अग्निः पंचेष्टकस्तस्माद्यदस्यांखनंत्यभीष्टकां तृंदन्त्यभिशर्करा९ सर्वा वा इयं वयोभ्योनक्तं दृशेदीप्यते तस्मादिमां वया९सि नक्तं नाध्यासते यएवं विद्वानग्निं चिनुते प्रत्येव (४) तिष्ठत्यभि दिशोजयत्याग्नेयोवै ब्राह्मणस्तस्माद्ब्राह्मणाय सर्वासु दिक्ष्वर्धुक९ स्वामेव तद्दिशमन्वेत्यपांवा अग्निः कुलायंतस्मादापोग्नि९ हारुकाः स्वामेवत द्योनिंप्रविशन्ति ( ३२ ) [ यत्सउपादधादेवद्वात्रिं९ शच्च ]॥४॥ संवत्सरमुख्यं भृत्वाद्वितीये संवत्सरआग्नेय मष्टाकपालं निर्वपेदैंद्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालं तृतीये संवत्सरेभिजिता यजेत यदष्टाकपालोभवत्यष्टाक्षरा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गायत्र्याग्नेयं गायत्रं प्रातःसवनं प्रातःसवनमेव तेन दाधार गायत्रींछन्दोयदेकादशकपालोभवत्येका-
दशाक्षरात्रिष्टुगैंद्रं त्रैष्टुभं माध्यं दिनꣳ सवनं माध्यंदिनमेव सवनं तेन दाधार त्रिष्टुभं १ छन्दोय-
द्वादशकपालोभवंतिद्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेन दाधा-
रजगतींछंदोयद्वार्हस्पत्यश्चरुर्भवंतिब्रह्म वैदेवानांबृहस्पतिर्ब्रह्मैव तेन दाधार यद्वैष्णवस्त्रिकपालो-
भवति यज्ञोवै विष्णुर्यज्ञमेव तेन दाधार यत्तृतीयेंसंवत्सरेंभिजितायजंते भिजित्यै यत्संवत्सरमुख्यं बि-
भर्तीमेव ( २ ) तेन लोकꣳ स्पृणोति यद्वितीये संवत्सरेग्निं चिनुतेन्तरिक्षमेव तेन स्पृणोति यत्तृती
ये संवत्सरे यजंतेमुमेव तेन लोकꣳ स्पृणोत्येतं वै परआट्णारः कक्षीवाꣳ औशिजोवीतहव्यःश्रा-
य स्त्रसदस्युः पौरुकुत्स्यः प्रजाकामाअचिन्वतततोवै ते सहस्रꣳ सहस्रं पुत्रानविन्दन्त प्रथते
प्रजया पशुभिस्तां मात्रामाप्नोति यान्ते गच्छन्यएवं ( ३ ) विद्वानेतमग्निं चिनुते ( ४ ) त्रि-
ष्टुभंमेवैवंचत्वारिच ] ॥ ५ ॥ प्रजापतिरग्निमचिनुत सक्षुरपविर्भूत्वातिष्ठत्तं देवाबिभ्यतोनोपायन्ते
छन्दोभिरात्मानं छादयित्वोपायन्तच्छंदसां छन्दस्त्वं ब्रह्मवैछन्दाꣳसि ब्रह्मणएतद्रूपं यत्कृष्णा-
जिनं कार्ष्णीउपानहावुपमुंचते छन्दोभिरेवात्मानं छादयित्वाग्निमुपचरत्यात्मनोहिꣳसायै देवनि-
धिर्वा एषनिधीयते यदग्निः ( १ ) अन्ये वा वै निधिमगुप्तं विन्दन्ति नवा प्रति प्रजानात्युखा-
माक्रामत्यात्मानमेवाधिपांकुरुते गुप्त्या अथो खल्वाहुर्नाक्रम्येति नैर्ऋत्युखायदाक्रामेन्निर्ऋत्या
आत्मानमपिदध्यात्तस्मान्नाक्रम्यां पुरुषशीर्षमुपदधाति गुप्त्या अथो यथा ब्रूयादेतन्मे गोपायेति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ताद्दृगेव तत् (२) प्रजापतिर्वा अथर्वाग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टकाअस्थान्येतꣳ हवाव तदृषिरभ्य-नूवाचेन्द्रोदधीचोअस्थभिरिति यदिष्टकाभिरग्निं चिनोति सात्मानमेवाग्निं चिनुते सात्मामुष्मिन्लो-के भवति यएवं वेद शरीरं वा एतदग्नेर्यच्चित्य आत्मा वैश्वानरोयच्चितेवैश्वानरं जुहोति शरीरमेव स-ꣳस्कृत्य (३) अभ्यारोहति शरीरं वा एतद्यजमानः सꣳस्कुरुते यदग्निंचिनुते यच्चिते वैश्वानरं जुहो-ति शरीरमेवसꣳस्कृत्यात्मनाभ्यारोहति तस्मात्तस्य नावद्यन्ति जीवन्नेव देवानप्यैति वैश्वानर्यर्चा-पुरीषमुपदधातीयं वा अग्निर्वैश्वानरः स्तस्यैषा चितिर्यत्पुरीषमग्निमेव वैश्वानरं चिनुतएषावाअग्नेः (४) प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य तनुवमवरुन्धे—१०) [ अग्निस्तत्सꣳस्कृत्याग्नेर्दशच ]

॥ ६ ॥ अग्नेर्वै दीक्षया देवाविराजमाप्नुवन्तिस्रोरात्रीर्दीक्षितः स्यात्त्रिपदाविराड्विराजमाप्नोति षड्रात्रीर्दीक्षितः स्यात्षड्वा ऋतवः संवत्सरः सँवत्सरोविराड्विराजमाप्नोति दशरात्रीर्दीक्षितः स्याद्दशा क्षरा विराड्विराजमाप्नोति द्वादशरात्रीर्दीक्षितःस्याद्द्वादशमासाः संवत्सरः सँवत्सरोविराड्विराजमाप्नोति त्रयोदशरात्रीर्दीक्षितःस्यात्त्रयोदश (१) मासाः संवत्सरः सँवत्सरोविराड्विराजमाप्नोति पंचदशरात्री दीक्षितः स्यात्पंचदश वा अर्धमासस्य रात्रयोर्धमासशः संवत्सरआप्यते संवत्सरोविराड्विराजमाप्नोति सप्तदश रात्रीर्दीक्षितः स्याद्द्वादशमासाः पंचर्तवः ससंवत्सरः सँवत्सरोविराड्विराजमाप्नोति चतुर्वि-ꣳशतिꣳ रात्रीर्दीक्षितः स्याच्चतुर्विꣳशतिरर्धमासाः संवत्सरः सँवत्सरोविराड्विराजमाप्नोतित्रिꣳशतꣳ रात्रीर्दीक्षितः स्यात् (२)त्रिꣳ शदक्षरा विराड्विराजमाप्नोतिमासं दीक्षितः स्याद्योमासःससंवत्सरः सं-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वत्सरोविराड्वि राजंमाप्नोति चतुरोमासोदीक्षितः स्याच्चतुरोवा एतं मासोवसंवोबिभरुस्ते पृथिवी-
माजयन्गायत्रीं छन्दोष्टौ रुद्रास्तैन्तरिक्षमाजयन्त्रिष्टुभं छन्दोद्वादशादित्यास्ते दिवमाजयन्ज-
गतींछन्दस्ततोवै ते (३) व्यावृतमगच्छन्छ्रैष्ठ्यं देवानां तस्माद्वादश मासोभूत्वाग्निं चिन्वीत द्वादश
मासाः संवत्सरः संवत्सरोग्निश्चित्य स्तस्याहोरात्राणीष्टकाआप्तेष्टकमेनंचिनुते थोव्यावृतमेव गच्छ-
ति श्रैष्ठ्यं समानानां (२८) [त्रयोदशस्यात्तेष्टाविंशतिश्च] ॥ ७ ॥ सुवर्गाय वा
एषलोकाय चीयते यदग्निस्तं यन्नान्वारोहेत्सुवर्गाल्लोकाद्यजमानोहीयेत पृथिवीमा क्रमिषं प्राणो-
मा माहासीदन्तरिक्षमाक्रमिषं प्रजामा माहासीद्दिवमाक्रमिषं सुवरगन्मेत्याहैषवा अग्नेर-
न्वारोहस्तेनैवैनमन्वारोहति सुवर्गस्य लोकस्य समष्ट्यै यत्पक्षसंमितां मिनुयात् (१) कनीया
ंसं यज्ञक्रतुमुपेयात्पापीयस्यस्यात्मनः प्रजास्याद्वेदिसंमितांमिनोति ज्यायांसमेव यज्ञक्रतुमुपैति
नास्यात्मनः पापीयसी प्रजा भवति साहस्रं चिन्वीत प्रथमं चिन्वानः सहस्रसंमितोवा अयंलोक-
इममेव लोकमभिजयति द्विषाहस्रं चिन्वीत द्वितीयं चिन्वानोद्विषाहस्रं वा अन्तरिक्षमंतरिक्ष
मेवाभिजयति त्रिषाहस्रंचिन्वीत तृतीयंचिन्वानः (२) त्रिषाहस्रोवा असौलोको-
मुमेव लोकमभिजयति जानुदघ्नं चिन्वीत प्रथमं चिन्वानोगायत्रियै वेमंलोकमभ्यारोहति
नाभिदघ्नं चिन्वीत द्वितीयं चिन्वानस्त्रिष्टुभैवांतरिक्षमभ्यारोहति ग्रीवदघ्नंचिन्वीत तृतीयं
चिन्वानोजगत्यैवामुं लोकमभ्यारोहति नाग्निंचित्वारामामुपेयादयोनौ रेतोधास्यामीति न द्वितीयं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation, Kolkata. Digitization: eGangotri.



चित्वान्यस्य स्त्रियम् (३) उपेयान्न तृतीयां चित्वा कां च नो पेयाद्रेतो वा एतन्निधत्ते यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येताथो खल्वाहुरप्रजस्यं तद्यन्नोपेयादिति यद्रेतःसिचावुप दधाति ते एव यजमानस्य रेतो बिभृतस्तस्मादुपेयाद्रेतसोऽस्कन्दाय त्रीणि वाव रेतांसि पिता पुत्रः पौत्रः (४) यद्द्वे रेतःसिचावुपदध्याद्रेतोऽस्य विच्छिन्द्यात्तिस्र उप दधाति रेतसः संतत्या इयं वाव प्रथमा रेतःसिग्वाग्वा इयं तस्मात्पश्यन्तीमां पश्यन्ति वाचं वदन्तीमन्तरिक्षं द्वितीया प्राणो वा अन्तरिक्षं तस्मान्नान्तरिक्षं पश्यन्ति न प्राणमसौ तृतीया चक्षुर्वा असौ तस्मात्पश्यन्त्यमूं पश्यन्ति चक्षुर्यजुषेमां च (५) अमूं चोप दधाति मनसा मध्यमामेषां लोकानां क्लृप्त्या अथो प्राणानामिष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीयेत्याह स्तुतशस्त्रे एवैतेन दुहे पिता मातरिश्वाच्छिद्रा पदा धा अच्छिद्रा उशिजः पदानु तक्षुः सोमो विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि शंसिषदित्याहैतद्वै (६) अग्नेरुक्थं तेनैवैनमनु शंसति — ७॥

[ मिनुयाच्चिन्वानः स्त्रियं पौत्रश्च वै सप्त च ॥ ८ ॥ सूयते वा एषोऽग्नीनां य उखायां भ्रियते यदधः सादयेद्गर्भाः प्रपादुकाः स्युरथो यथा सवात्प्रत्यवरोहति तादृगेव तदासन्दी सादयति गर्भाणां धृत्या अप्रपादायाथो सवमेवैनं करोति गर्भो वा एष यदुख्यो योनिः शिक्यं यच्छिक्यादुखां निरूहेद्योनेर्गर्भं निर्हण्यात्षडुद्यामं शिक्यं भवति षोढा विहितो वै (१) पुरुष आत्मा च शिरश्च चत्वार्यङ्गान्यात्मन्नेवैनं बिभर्ति प्रजापतिर्वा एष यदग्निस्तस्योखा चोलूखलं च स्तनौ तावस्य प्रजा उपजीवन्ति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यदुखां चोलुखलं चोप दधाति ताभ्यामेवयजमानो मुष्मिँल्लोकेग्निन्दुहे संवत्सरोवा एषय-
दग्निस्तस्य त्रेधा विहिता इष्टकाः प्राजापत्यावैष्णवीः ( २ ) वैश्वकर्मणीरहोरात्राण्येवास्य
प्राजापत्या यदुख्यं बिभर्ति प्राजापत्याएव तदुपधत्ते यत्समिध आदधातिवैष्णवावै वन-
स्पतयोवैष्णवीरेव तदुपधत्ते यदिष्टकाभिरग्निं चिनोतीयं वै विश्वकर्मा वैश्वकर्मणीरेव त-
दुपधत्ते तस्मादाहुस्त्रिवृदग्निरिति तं वा एतं यजमानएव चिन्वीत यदस्या न्यः ( ३ )
चिनुयाद्यत्तं दक्षिणाभिर्नराधयेदग्निमस्य वृंजीत योस्याग्निं चिनुयात्तं दक्षिणाभीराधयेदग्नि-
मेव तत्स्पृणोति—( २० ) [ वैवैष्णवीरन्योविꣳशतिश्च ] ॥ १ ॥ प्रजापतिरग्निमचिनुतर्तुभिः सं-
वत्सरं वसन्तेनैवास्य पूर्वार्धमचिनुत ग्रीष्मेण दक्षिणं पक्षं वर्षाभिः पुच्छꣳ शरदोत्तरं पक्षꣳ
हेमन्तेन मध्यं ब्रह्मणावा अस्य तत्पूर्वार्धमचिनुत क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छं विशोत्तरं
पक्षमाशया मध्यं यएवं विद्वानग्निं चिनुतऋतुभिरेवैनं चिनुतेथो एतदेव सर्वमव (१) रुन्धे शृण्वन्त्यै
नमग्निं चिक्यानमत्यन्नꣳ रोचत इयं वाव प्रथमा चितिरोषधयोवनस्पतयः पुरीषमन्तरिक्षं
द्वितीयावयाꣳसि पुरीषमसौ तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषं यजमानः
पंचमी प्रजापुरीषं यत्त्रिचितीकं चिन्वीत यज्ञं दक्षिणामात्मानं प्रजामन्तरियात्तस्मात्पंचचिती-
कश्चेतव्य एतदेव सर्वꣳ स्पृणोति यत्तिस्रश्चितयः ( २ ) त्रिवृध्यग्निर्यद्वेद्विपाद्यजमानः प्रतिष्ठित्यै
पंचचितयोभवन्ति पाङ्क्तः पुरुषआत्मानमेव स्पृणोति पंचचितयोभवन्ति पंचभिः पुरीषैरभ्यूहति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दश संपद्यन्ते दशाक्षरोवै पुरुषोयावानेव पुरुषस्तः स्पृणोत्यथो दशाक्षरा विराडन्नं विराड्विरा-ज्येवान्नाद्ये प्रतिष्ठति संवत्सरोवै षष्ठीचितिर्ऋतवः पुरीषं (३) षड्चितयोभवन्ति षट् पुरीषाणि द्वादश संपद्यन्ते द्वादश मासाः संवत्सरः संवत्सरएव प्रतितिष्ठति—१५) [ अवचितयःपुरीषंपंचद-शच ]॥ १० ॥ रोहितोधूम्ररोहितः कर्कन्धुरोहितस्ते प्राजापत्या बभ्रुररुणबभ्रुः शुकबभ्रुस्ते रौ-द्राः श्येतः श्येताक्षः श्येतग्रीवस्ते पितृदेवत्यास्तिस्रः कृष्णा वशा वारुण्यस्तिस्रः श्वेतावशाः सौ-र्यौमैत्रावार्हस्पत्या धूम्रललामास्तूपराः —२६) [ रोहितःषड्विंशतिः ] ॥ ११ ॥ पृश्निस्तिरश्ची नपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णीबलक्षीताः सारस्वत्यः पृषती स्थूलपृषतीक्षुद्रपृषतीना वैश्वदेव्यस्तिस्रः श्यामा वशाः पौष्णियस्तिस्रोरोहिणीवशा मैत्रियऐन्द्रावार्हस्पत्या अरुणललामा स्तूपराः—२६) [ पृश्निःषड्विंशतिः ] ॥ १२ ॥ शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्तऐन्द्रवायवाः शितिरंध्रोन्यतः शितिरंध्रः समन्तशितिरंध्रस्ते मैत्रावरुणाः शुद्ध-वालः सर्वशुद्धवालोमणिवालस्त आश्विनास्तिस्रः शिल्पा वशा वैश्वदेव्यस्तिस्रः श्येनीः परमेष्ठिने सोमापौष्णाः श्यामललामास्तूपराः —२५) [ शितिबाहुःपंचविंशतिः ) ॥ १३ ॥ उन्नतऋषभोवामनस्तऐन्द्रावरुणाः शितिककुच्छितिपृष्ठः शितिभसत्तऐन्द्राबार्हस्पत्याः शिति पाच्छित्योष्ठः शितिभ्रुस्तऐन्द्रावैष्णवा स्तिस्रः सिध्मावशावैश्वकर्मण्य स्तिस्रोधात्रेपृषोदराऐन्द्रा-पौष्णाः श्येतललामास्तूपराः —२५) [ उन्नतःपंचविंशतिः ) ॥ १४ ॥ कर्णास्त्रयोयामाः सौ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



म्यास्त्रयंश्वितिंगाअग्नये यविष्ठायत्र यौनकुलास्तिस्रोरोहिणीस्त्र्यव्यस्तावसूनां तिस्रोरुणादित्यौ-ह्यंस्तारुद्राणा ँ सोमैंद्राबभ्रुलंलामास्तूपराः —२३ ) [ कर्णास्त्रयोविंशतिः ) ॥ १५ ॥ शुंठास्त्र-योवैष्णवाअंधीलोधकर्णास्त्रयोविष्णवउरुक्रमाय लप्सुदिनस्त्रयोविष्णवउरुगायाय पंचावीस्ति-स्रआदित्यानां त्रिवत्सास्तिस्रोंगिरसामैंद्रावैष्णवा गौरलंलामास्तूपराः —२० ) ( शुंठाविंश-तिः ) ॥ १६ ॥ इंद्राय राज्ञे त्रयः शितिपृष्ठाइंद्रायाधिराजाय त्रयः शितिककुद इंद्रायस्वराज्ञे त्रयः शितिभसदस्तिस्रस्तुर्यौह्यः साध्यानां तिस्रः पष्ठौह्योविश्वेषां देवानामाग्नेन्द्राः कृष्णलंलामा-स्तूपराः —२२ ) [ इंद्रायद्वाविंशतिः ] ॥ १७ ॥ अदित्यै त्रयोरोहितैताइंद्राण्यै त्रयः कृष्णै-ताः कुह्वै त्रयोरुणैतास्तिस्रो धेनवोराकायै त्रयोनड्वाहः सिनीवाल्याआग्नावैष्णवारोहितललामास्तू-पराः— १८ ) [ अदित्याअष्टादश ] ॥ १८ ॥ सौम्यास्त्रयः पिशंगाः सोमाय राज्ञे त्रयः सारंगाः पा-र्जन्यानभोरूपास्तिस्रोजामल्हाइंद्राण्यै तिस्रोमेष्यआदित्याद्यावापृथिव्यामालंगास्तूपराः— १९ ] सौम्याएकान्नविंशतिः॥१९॥ वारुणास्त्रयः कृष्णलंलामावरुणायराज्ञे त्रयोरोहितललामावरुणाय रिशादसेत्रयोरुणलंलामाः शिल्पास्त्रयोवैश्वदेवास्त्रयः पृश्नयःसर्वदेवत्याऐंद्रासूराःश्येतललामास्तूपराः —२० [ वारुणाविंशतिः ] ॥२०॥ सोमाय स्वराज्ञे नोवाहावनड्वाहाविंद्राग्निभ्यामोजोदाभ्यामुष्टा-राविंद्राग्निभ्यांवलदाभ्या ँ सीरवाहावर्वीद्वेधेनू भौमीदिग्भ्योवडबेद्वेधेनूभौमीवैराजीपुरुषीद्वेधेनू-भौमी वायवआरो हणवा हावनड्वाहौ वारुणी कृष्णेवशे अराड्यौदिव्यावृषभौ परिमरौ २४ सोमायच

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तुस्त्रिꣳशत्] ॥२१॥ एकादश प्रातर्गव्याः पशवआलभ्यन्ते छगलःकल्माषः किकिदीविर्विदीगय-स्ते त्वाष्ट्राः सौरीर्नवश्वेतावशा अनुबन्ध्याभवन्त्याग्नेयऐन्द्राग्नआश्विनस्ते विशालयूपआलभ्य-न्ते २३) [ एकादशपंचविꣳशतिः ] २२ पिशंगास्त्रयोवासन्ताः सारङ्गास्त्रयोग्रैष्माः पृषन्तस्त्रयोवार्षिकाः पृश्नयस्त्रयः शारदाः पृश्निसक्थास्त्रयोहैमन्तिकाअवलिप्तास्त्रयः शैशिराः संवत्सरायनिवक्षसः २० [ पिशङ्गाविꣳशतिः ] ( २३ ) हिरण्यवर्णा ( २२२ ) अपां ( २१७ ) भूतेष्टका ( ११८ ) सजूः ( २३२ ) संवत्सरं ( १५४ ) प्रजापतिं ( २१० ) रश्मिः ( १७८ ) सुवर्गाय ( ३०७ ) सूयते ( १७० ) प्रजापती ( १ ) रोहितः ( २६ ) पृश्निः ( २६ ) शितिबाहु ( २५ ) रुन्नतः ( २५ ) कर्णाः ( २३ ) शुंठाः ( २० ) इंद्राया ( २२ ) दित्यै ( १८ ) सौम्या ( ११ ) वारुणाः ( २० ) सौमायै ( ३४ ) कादश ( २५ ) पिशंगा ( २० ) स्त्रयोविꣳशतिः ( २४३६ ) इतितैत्तिरीयसंहितायांपंचमकाण्डेषष्ठःप्रपाठकः ॥

ॐम् योवा अयथादेवतमग्निं चिनुतआदेवताभ्योवृश्च्यते पापीयान् भवति योयथादेवतं न देवताभ्यआवृश्च्यते वसीयान् भवत्याग्नेय्या गायत्रिया प्रथमां चितिमभिमृशेत्त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थी पंक्त्या पंचमीं यथादेवतमेवाग्निं चिनुते न देवताभ्यआवृश्च्यते वसीयान् भवतीडायै वा एषा विभक्तिः पशवइडा पशुभिरेनम् ( १ ) चिनुते योवै प्रजापतये प्रति प्रोच्याग्निं चिनोति नार्तिमार्छत्यश्वावभितस्तिष्ठेतां कृष्णउत्तरतः श्वेतोदक्षिणस्तावालभ्येष्टकाउप

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दध्यादेतद्वै प्रजापतेरूपं प्राजापत्योश्वः साक्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्छत्येतद्वा अह्नोरूपं यच्छ्वेतोश्वोरात्रियै कृष्णएतदह्नः ( २ ) रूपं यदिष्टकारात्रियै पुरीषमिष्टकाउपधास्यन्छ्वेतमश्वमभिमृशेत्पुरीषमुपधास्यन्कृष्णमहोरात्राभ्यामेवैनं चिनुते हिरण्यपात्रं मधोःपूर्णं ददाति मधव्योसानीति सौर्याचित्रवत्यावेक्षते चित्रमेव भवति मध्यन्दिनेश्वमवघ्रापयत्यसौ वा आदित्यइंद्रएषप्रजापतिः प्राजापत्योश्वस्तमेव साक्षादृध्नोति —४८ ) [ एनमेतदह्नोष्टाचत्वारिंशच्च ]

॥ १ ॥ त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् । अस्थूरिणोगार्हपत्यानिसन्तु तिग्मेन नोब्रह्मणा सꣳशिशाधि । पशवोवा एते यदिष्टकाश्चित्यां चित्यामृषभमुपदधाति मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय तस्माद्यूथेयूथऋषभः । संवत्सरस्य प्रतिमांयां त्वारात्र्युपासते । प्रजाꣳसुवीरां कृत्वा विश्वमायुर्व्यश्नवत् । प्राजापत्याम् ( १ ) एतामुपदधातीयं वा वैषैकाष्टका यदेवैकाष्टकायामन्नं क्रियते तदेवैतया वरुन्धएषा वै प्रजापतेः कामदुघा तयैव यजमानोमुष्मिन्लोकेग्निं दुहे येन देवाज्योतिषोर्ध्वाउदायन्येनादित्यावसवोयेन रुद्राः । येनांगिरसोमहिमानमानशुस्तेनैतु यजमानः स्वस्ति । सुवर्गाय वा एषलोकाय ( २ ) चीयते यदग्निर्येन देवाज्योतिषोर्ध्वाउदायन्नित्युख्यꣳ समिन्धइष्टकाएवैताउपधत्ते वानस्पत्याः सुवर्गस्य लोकस्य समष्ट्यै शतायुधाय शतवीर्याय शतोतयेभिमातिषाहे । शतं योनः शरदोअजीतानिंद्रोनेषदति दुरितानिविश्वा । ये चत्वारः पथयोदेवयानाअन्तराद्यावापृथिवी वियन्ति । तेषां योअज्यानि मजीतिमावहात्तस्मै नोदेवाः ( ३ )

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



परिदत्ते हसवै। ग्रीष्मोहेमन्तउतनोवसंतः शरद्वर्षाः सुवितं नोअस्तु। तेषामृतूनाᳪ शतशारदानां निवातएषामभये स्याम। इदुवत्सराय परिवत्सराय संवत्सराय कृणुताबृहन्नमः। तेषां वयᳪ सुमतौ यज्ञियानां ज्योगजीताअहताःस्याम। भद्रान्नः श्रेयः समनैष्टदेवास्त्वया वसेन समशीमहित्वा। सनोमयोभूः पितो (४) आविशस्व शंतोकाय तनुवे स्योनः। अज्यानीरेता उपदधात्येताबै देवताअपराजितास्ताएव प्रविशति नैव जीयते ब्रह्मवादिनोवदन्ति यदर्धमासामासाऋतवः संवत्सरओषधीः पचंत्यथ कस्मादन्याभ्योदेवताभ्यआग्रयणं निरुप्यतइत्येताहि तद्देवता उदजयन्यदृतुभ्योनिर्वपेद्देवताभ्यः समदंदध्यादाग्रयणं (५) निरुप्यैताआहुतीर्जुहोत्यर्धमासानेव मासानृतून्संवत्सरं प्रीणाति नदेवताभ्यः समदं दधाति भद्रान्नः श्रेयः समनैष्टदेवाइत्याह हुताद्याययजमानस्यापराभावाय— २५) [प्राजापत्यांल्लोकायदेवाः पितोआग्रयणंपंचविᳪशतिश्च ] ॥ २ ॥ इंद्रस्य वज्रोसि वार्त्रघ्नस्तनूपानः प्रतिस्पशः। योनः पुरस्ताद्दक्षिणतः पश्चादुत्तरतोघायुरभिदासत्येतᳪ सोश्मानमृच्छतु। देवासुराः संयत्ताआसन्तेसुरादिग्भ्यआबाधन्त तान्देवाइष्वा च वज्रेण चापानुदन्त यद्वज्रिणीरुप दधातीष्वा चैव तद्वज्रेण च यजमानोभ्रातृव्यानपनुदते दिक्षूप (१) दधाति देवपुराएवैतास्तनूपानीः पर्यूहते अग्राविष्णूसजोषसे मावर्धन्तु वां गिरः। द्युम्नैर्वाजेभिरागतम्। ब्रह्मवादिनोवदंति यन्न देवतायै जुह्वत्यथ किंदेवत्या वसोर्धारेत्यग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धाराग्रावैष्णव्यर्चा वसो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धारां जुहोति भागधेयेनैवैनौ समर्धयत्यथो एताम् ( २ ) एवाहुतिमायतनवतीं करोति यत्काम एनां जुहोति तदेवावरुंधे रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या यच्छतरुद्रीयं जुहोति यैवास्य घोरा तनूस्तां तेन शमयति यद्वसोर्धारां जुहोति यैवास्य शिवा तनूस्तां तेन प्रीणाति यो वै वसोर्धारायै ( ३ ) प्रतिष्ठां वेद प्रत्येव तिष्ठति यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनं पचेत्तं ब्राह्मणाश्चत्वारः प्राश्नीयुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मण एषा खलु वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायामेवैनां तनुवां प्रतिष्ठापयति चतस्रो धेनूर्दद्यात्ताभिरेव यजमानोमुष्मिँल्लोकेग्निं दुहे—४६ ) [ उपैतां धारायै षट्चत्वारिँशच्च ] ॥ ३ ॥ चित्तिं जुहोमि मनसा घृतेनेत्याहादाभ्या वैनामैषाहुतिर्वैश्वकर्मणी नैनं चिक्यानं भ्रातृव्यो दभ्नोत्यथो देवता एवावरुंधेग्ने तमद्येति पंक्त्या जुहोति पंक्त्याहुत्या यज्ञमुखमारभते सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह होत्रा एवावरुंधेग्निर्देवेभ्योपाक्रामद्भागधेयम् ( १ ) इच्छमानस्तस्मा एतद्भागधेयं प्रायच्छन्नेतद्वा अग्नेरग्निहोत्रमेतर्हि खलु वा एष जातो यर्हि सर्वश्चितो जातायैवास्मा अन्नमपि दधाति स एनं प्रीतः प्रीणाति वसीयान्भवति ब्रह्मवादिनो वदंति यदेष गार्हपत्यश्चीयतेथ क्वास्याहवनीय इत्यसावादित्य इति ब्रूयादेतस्मिन्हि सर्वाभ्यो देवताभ्यो जुह्वति ( २ ) य एवं विद्वानग्निं चिनुते साक्षादेव देवता ऋध्नोत्यग्ने यशस्विन्यशसे ममर्पयेन्द्रावतीमपचितीमिहावह । अयं मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तमः श्लोको अस्तु । भद्रं पश्यंत उपसेदुरग्रे तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जातं तदस्मै देवाअभिसंनमंतु। धाता विधाता परमा (३) उतसंदृक् प्रजापतिः परमेष्ठी वि-
राजा। स्तोमाश्छंदाꣳसि निविदोमआहुरेतस्मै राष्ट्रमभि संनमाम। अभ्यावर्तध्वमुपमेतसाकमयꣳ
शास्ताधिपतिर्वोअस्तु। अस्य विज्ञानमनुसꣳरभध्वमिमं पश्चादनुजीवाथ सर्वे। राष्ट्रभृतएताउ-
पदधात्येषा. वा अग्नेश्चितीराष्ट्रभृत्तयैवास्मिन्राष्ट्रं दधाति (४) राष्ट्रमेव भवति नास्माद्राष्ट्रं भ्र-
ꣳशते— ७) [ भागधेयंजुहोतिपरमादधातिसप्तच ] ॥ ४ ॥ यथा वै पुत्रोजातोम्रियतएवं वा
एषम्रियते यस्याग्निरुख्यउद्वायति यं निर्मंथ्यं कुर्याद्विच्छिंद्याद्भ्रातृव्यमस्मै जनयेत्सएव पुनः प-
रीध्यस्स्वादेवैनं योनेर्जनयति नास्मै भ्रातृव्यं जनयति तमोवाएतं गृह्णाति यस्याग्निरुख्यउद्वायति
मृत्युस्तमः कृष्णं वासः कृष्णा धेनुर्दक्षिणा तमसा (१) एवतमोमृत्युमपहते हिरण्यं ददा-
ति ज्योतिर्वैहिरण्यं ज्योतिषैव तमोपहतेथो तेजोवै हिरण्यं तेजएवात्मं धत्ते सुवर्न घर्म-
स्वाहा सुवर्नार्कस्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहार्कोवा
एषयदग्निरसावादित्यः (२) अश्वमेधोयदेताआहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीꣳषि संदधा-
त्येषह त्वा अर्काश्वमेधीयस्यैतदग्नौ क्रियतआपोवा इदमग्रेसलिलमासीत्सएतां प्रजापतिः
प्रथमां चितिमपश्यत्तामुपाधत्त तदियमभवत्तं विश्वकर्माब्रवीदुपत्वायानीति नेहलोकोस्तीति
(३) अब्रवीत्सएतां द्वितीयां चितिमपश्यत्तामुपाधत्त तदंतरिक्षमभवत्सयज्ञः प्रजापतिमब्रवी
दुपत्वायानीति नेह लोकोस्तीत्यब्रवीत्सविश्वकर्माणमब्रवीदुपत्वायानीति केन मोपैष्यसीति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दिश्याभिरित्यब्रवीत्तं दिश्याभिरुपैत्ताउपाधत्त तादिशः ( ४ ) अभवन्त्सपरमेष्ठी प्रजापतिमब्रवीदुपत्वायानीति नेह लोकोस्तीत्यब्रवीत्सविश्वकर्माणं च यज्ञं चाब्रवीदुप वामायानीति नेह लोकोस्तीत्यब्रूता१ं सएतांतृतीयां चितिमपश्यत्तामुपाधत्त तदसावभवत्सआदित्यः प्रजापतिमब्रवीदुपत्वा ( ५ ) आयानीति नेह लोकोस्तीत्यब्रवीत्सविश्वकर्माणं च यज्ञं चाब्रवीदुपवामायानीति नेह लोकोस्तीस्त्यब्रूता१ंसपरमेष्ठिनमब्रवीदुपत्वायानीति केन मोपैष्यसीति लोकं पृणयेत्यब्रवीत्तं लोकं पृणयोपैत्तस्मादयातयाम्नी लोकं पृणायातयामाह्यसौ ( ६ ) आदित्यस्तानृषयोब्रुवन्नुपवआयामेति केन नउपैष्यथेति भूम्नेत्यब्रुवन्तान्द्वाभ्यां चितीभ्यामुपायन्त्सपंचचितीकः समपद्यत यएवं विद्वानग्निं चिनुते भूयानेव भवत्यभीमान्लोकाञ्जयति विदुरेनं देवाअथो एतासामेव देवताना१ं सायुज्यं गच्छति—४५ ) [ तमसादित्यैति दिशस्त्वासोपंचचत्वारि१ंशच्च ] ॥ ५ ॥ वयोवा अग्निर्यदग्निचित्पक्षिणोश्नीयात्तमेवाग्निमद्यादार्तिमार्छेत्संवत्सरं व्रतं चरेत्संवत्सर१ं हि व्रतं नातिपशुर्वा एषयदग्निर्हिनस्ति खलु वै तं पशुर्यएनं पुरस्तात्प्रत्यंचमुपचरति तस्मात्पश्चात्प्राङुपचर्यआत्मनोहि१ंसायै तेजोसि तेजोमे यच्छपृथिवीं यच्छ ( १ ) पृथिव्यैमापाहिज्योतिरसि ज्योतिर्मे यच्छांतरिक्षं यच्छांतरिक्षान्मापाहि सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवोमा पाहीत्याहैताभिर्वा इमे लोकाविधृतायदेताउपदधात्येषां लोकानां विधृत्यै स्वयमातृण्णाउपधाय हिरण्येष्टकाउपदधातीमे वै लोकाः स्वयमातृण्णाज्योतिर्हिरण्यं यत्स्वयमातृ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



णाउंपधाय (२) हिरण्येष्टकाउंपदधाति मानेवैताभिर्लोकाज्योतिष्मतः कुरुतेथो एताभिरे-वास्माइमे लोकाः प्रभांति यास्ते अग्ने सूर्ये रुचउद्यतोदिवमातन्वंति रश्मिभिः । ताभिः सर्वाभी रुचे जनाय नस्कृधि । यावोदेवाः सूर्ये रुचोगोष्वश्वेषु यारुचः । इंद्राग्नीताभिः सर्वाभीरुचं नोधत्त बृहस्पते । रुचं नोधेहि (३) ब्राह्मणेषु रुच॑राजसु नस्कृधि । रुचं विश्येषु शूद्रेषु मयि धेहि रुचारुचं । द्वेधा वा अग्निं चिक्या नस्य यशइंद्रियं गच्छत्यग्निं वाचितमीजानं वा यदेता-आहुतीर्जुहोत्यात्मन्नेव यशइंद्रियं धत्तईश्वरोवा एषआर्तिमार्तोर्योग्निं चिन्वन्नधिक्रामति तत्त्वायामि ब्रह्मणा वंदमानइति वारुण्यर्चा (४) जुहुयाच्छांतिरेवैषाग्नेर्गुप्तिरात्मनोहविष्कृतोवा एषयोग्निं चिनुते यथा वैहविः स्कंदत्येवं वा एषस्कंदति योग्निं चित्वास्त्रियमुपैति मैत्रावरुण्यामिक्षया यजेत मैत्रावरुणतामेवोपैत्यात्मनोस्कंदाय योवाअग्निमृतुस्थां वेदर्तुर्कतुरस्मै कल्पमानएति प्रत्येव तिष्ठति संवत्सरोवा अग्निः (५) ऋतुस्थास्तस्य वसंतः शिरोग्रीष्मादक्षिणः पक्षोवर्षाः पुच्छं॑ शरदुत्तरः पक्षोहेमंतोमध्यंपूर्वपक्षाश्चितयोपरपक्षाः पुरीषमहोरात्राणीष्टकाएषवा अग्निरृतुस्था-यएवं वेदर्तुर्कतुरस्मै कल्पमानएति प्रत्येव तिष्ठति प्रजापतिर्वा एतं ज्यैष्ठ्यकामोन्यधत्त ततोवै स-ज्यैष्ठ्यमगच्छद्यएवं विद्वानग्निं चिनुते (६) ज्यैष्ठ्यमेवगच्छति (३) [ यच्छोपधायधेह्यृचाग्निश्चिं नुतेत्रीणिच ] ॥ ६ ॥ यदाकूतात्समसुस्रोध्दृदोवा मनसोवा संभृतं चक्षुषोवा । तमनुप्रेहि सुकृतस्य लोकं यत्रर्षयः प्रथमजाये पुराणाः । एतं॑ सधस्थपरिते ददामि यमावहाच्छेवधिं जातवेदाः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अन्वागंता यज्ञपतिर्वोअत्र तꣳस्मजानीत परमेव्योमन् । जानीतादेनं परमेव्योमन्देवाः सधस्था-
विदरूपमस्य । यदागच्छात् ( १ ) पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै । संप्रच्यवध्वमनु सं-
प्रयाताग्नेपथोदेवयानान्कृणुध्वं । अस्मिन्त्सधःस्थे अध्युत्तरस्मिन्विश्वे देवायजमानश्च सीदत ।
प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नोवह सुवर्देवेषु गंतवे । यदिष्टं यत्परादा-
नं यद्दत्तं या च दक्षिणा । तत् ( २ ) अग्निर्वैश्वकर्मणः सुवर्देवेषु नोदधत् । येना सहस्रं वहसि ये-
नाग्ने सर्ववेदसम् । तेनेमं यज्ञं नोवह सुवर्देवेषु गंतवे । येनाग्ने दक्षिणायुक्ता यज्ञं वहन्त्यृत्विजः ।
तेनेमं यज्ञं नोवह सुवर्देवेषु गंतवे । येनाग्ने सुकृतः पथामधोधारा व्यानशुः । तेनेमंयज्ञं नोवह सुव-
र्देवेषु गंतवे ( ३ ) यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः सुवर्देवेषु नोदध
त् —१४ ) [ आगछात्तद्गंतवेचतुर्दशच ] ॥ ७ ॥ यास्ते अग्ने समिधोयानि धाम याजिह्वा
जातवेदोयोअर्चिः । येते अग्ने मेडयायइंदवस्तेभिरात्मानं चिनुहि प्रजानन् । उत्संनयज्ञोवा एष-
यदग्निः किंवाहैतस्य क्रियते किंवानयद्वा अध्वर्युरग्नेश्चिन्वन्नंतरेत्यात्मनोवै तदंतरेति यास्ते अ-
ग्ने समिधोयानि ( १ ) धामेत्याहैषा वा अग्नेः स्वयंचिति रग्निरेव तदाग्निं चिनोति नाध्वर्युरात्म
नोंतरेति चतस्रआशाः प्रचरन्त्वग्नयइमं नोयज्ञं नयतु प्रजानन् । घृतं पिन्वन्नजरꣳ सुवीरं ब्रह्म
समिद्भवत्याहुतीनाम् । सुवर्गाय वा एषलोकायोपधीयते यत्कूर्मश्चतस्रआशाः प्रचरन्त्वग्नयइ-
त्याह ( २ ) दिशएवैतेन प्रजानातीमं नोयज्ञं नयतु प्रजानन्नित्याह सुवर्गस्य लोकस्याभिनीत्यै

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ब्रह्मसमिद्धवत्याहुतीनामित्याह ब्रह्मणा वै देवाः सुवर्गं लोकमायन्यद्ब्रह्मण्वत्योप दधाति ब्रह्मणैव तद्यजमानः सुवर्गं लोकमेति प्रजापतिर्वा एषयदग्निस्तस्य प्रजाः पशवश्छंदांꣳसि रूपꣳस र्वान्वर्णानिष्टकानां कुर्याद्रूपेणैव प्रजां पशून् छंदाꣳस्यव रुंधेथो प्रजाभ्यएवैनं पशुभ्यश्छंदोभ्योवरुध्यंचिनुते—१६ ) [ यान्याहेष्टकानाꣳषोडशच ) ॥ ८ ॥ मयिगृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मयि प्रजां मयि वर्चोदधाम्यरिष्टाः स्याम तनुवा सुवीराः। योनोअग्निः पितरोहृत्स्वंतरमर्त्योमर्त्याꣳ आविवेश ) तमात्मन्परिगृह्णीमहे वयं मासोअस्माꣳ अवहाय परागात् । यदध्वर्युरात्मन्नग्निमगृहीत्वाग्निं चिनुयाद्योस्य स्वोग्निस्तमपि ( १ ) यजमानाय चिनुयादग्निं खलु वै पशवोनूपतिष्ठंते पक्रामुकाअस्मात्पशवः स्युर्मयि गृह्णाम्यग्रे अग्निमित्याहात्मन्नेव स्वमग्निं दाधार नास्मात्पशवोपक्रामंति ब्रह्मवादिनोवदंति यन्मृचापश्चाग्नेरन्नाद्यमथ कस्मान्मृदा चाद्भिश्चाग्निश्चीयतइति यदद्भिः संयौति ( २ ) आपोवै सर्वा देवतादेवताभिरेवैनꣳ सꣳसृजति यन्मृदा चिनोतीयं वा अग्निर्वैश्वानरोग्निनैव तदग्निं चिनोति ब्रह्मवादिनोवदंति यन्मृदा चाद्भिश्चाग्निश्चीयतेथ कस्मादग्निरुच्यतइति यच्छंदोभिश्चिनोत्यग्नयोवै छंदाꣳसि तस्मादग्निरुच्यतेथो इयं वा अग्निर्वैश्वानरोयत् ( ३ ) मृदा चिनोति तस्मादग्निरुच्यते हिरण्येष्टकाउपदधाति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मिन्दधात्यथो तेजोवै हिरण्यं तेजएवात्मन्धत्ते योवा अग्निꣳसर्वतोमुखं चिनुते सर्वासुप्रजास्वन्नमत्ति सर्वादिशोभि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जयति गायत्रीं पुरस्तादुपदधाति त्रिष्टुभं दक्षिणतोजगतीं पश्चादनुष्टुभमुत्तरतः पंक्तिं मध्यएषवै (४) अग्निः सर्वतोमुखस्तं यएवं विद्वाꣳश्चिनुते सर्वासुप्रजास्वन्नमत्ति सर्वादिशोभिजयत्यथो दिश्येव दिशं प्रवयति तस्माद्दिशि दिक् प्रोता —२५) [ अपिसंयौतियद्वैपंचविꣳशतिश्च ] ॥ ९ ॥ प्रजापतिरग्निमसृजत सोस्मात्सृष्टः प्राङ्प्राद्रवत्तस्माअश्वं प्रत्यास्यत्सदक्षिणावर्तत तस्मै वृष्णिं प्रत्यास्यत्सप्रत्यङ्ङावर्तत तस्मादृषभं प्रत्यास्यत्सउदङ्ङावर्तत तस्मै बस्तं प्रत्यास्यत्स ऊर्ध्वोद्रवत्तस्मै पुरुषं प्रत्यास्यद्यत्पशुशीर्षाण्युपदधाति सर्वतएवैनं (१) अवरुध्य चिनुतएतावै प्राणभृतश्चक्षुष्मतीरिष्टकायत्पशुशीर्षाणि यत्पशुशीर्षाण्युप दधाति ताभिरेव यजमानोमुष्मिं-ल्लोके प्राणित्यथो ताभिरेवास्माइमे लोकाः प्रभान्ति मृदाभिलिप्योपदधाति मेध्यत्वाय पशुर्वा एषयदग्निरन्नं पशवएषखलु वा अग्निर्यत्पशुशीर्षाणि यं कामयेत कनीयोस्यान्नं (२) स्यादिति संतरां तस्य पशुशीर्षाण्युपदध्यात्कनीयएवास्यान्नं भवति यं कामयेत समावदस्यान्नꣳ स्यादिति मध्यतस्तस्योपदध्यात्समावदेवास्यान्नं भवति यं कामयेत भूयोस्यान्नꣳ स्यादित्यंतेषु तस्य व्युदूह्योपदध्यादंततएवास्माअन्नमवरुंधे भूयोस्यान्नं भवति (३) [ एनमन्नंभवति ] ॥ १० ॥ स्तेगां दꣳष्ट्राभ्यां मंडूकान्जंभ्येभिरादकांखादेनोर्जꣳसꣳसूदेनारण्यं जाम्बीलेन मृदं बर्स्वेभिः शर्कराभिरवकामवकाभिःशर्करामुत्सादेन जिह्वामवक्रंदेन तालुꣳ सरस्वतीं जिह्वाग्रेण—२२) [स्तेगांद्वाविꣳशतिः ]॥ ११ ॥ वाजꣳ हनूभ्यामपआस्येनादित्यान्छ्मश्रुभिरुपयाममधरेणोष्ठेन सदुत्तरेणांत

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रेणानूकाशं प्रकाशेनबाह्यꣳ स्तनयित्नुं निर्बाधेन सूर्याग्नी चक्षुर्भ्यां विद्युतौ कुनानकाभ्यामशनिं मस्तिष्केण बलं मज्जभिः—२५ ) [ वाजंपंचविꣳशतिः ]॥ १२॥ कूर्मान्छफैरच्छलाभिः कपिंजलान्सामकुष्ठिकाभिर्जवं जंघाभिरगदं जानुभ्यां वीर्यं कुहाभ्यां भयं प्रचालाभ्यां गुहोपपक्षाभ्यामश्विनावꣳसाभ्याम दितिꣳ शीर्ष्णा निर्ऋतिं निर्जाल्मकेनशीर्ष्णा—२२ ) [ कूर्मांत्रयोविꣳशतिः ] ॥ १३ ॥ योक्त्रं गृध्राभिर्युगमानतेन चित्तं मन्याभिः संक्रोशान्प्राणैः प्रकाशेन त्वचं पराकाशेनांतरां मशकान्केशैरिंद्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन रथमुष्णिहाभिः— २१ ) [ योक्त्रमेकविꣳशतिः ]॥१४ ॥ मित्रावरुणौ श्रोणीभ्यामिंद्राग्नी शिखंडाभ्यामिंद्राबृहस्पती ऊरुभ्यामिंद्राविष्णू अष्ठीवद्भ्याꣳ सवितारं पुच्छेन गंधर्वाञ्छेपेनाप्सरसोमुष्काभ्यां पवमानं पायुना पवित्रं पोत्राभ्यामाक्रमणꣳ स्थूराभ्यां प्रतिक्रमणं कुष्ठाभ्यां—२२ ) [ मित्रावरुणौद्वाविꣳशतिः ] ॥१५॥ इंद्रस्य क्रोडोदित्यै पाजस्यंदिशांजत्रवोजीमूतान्हृदयौपशाभ्यामंतरिक्षं पुरितता नभउदर्येणेंद्राणीं प्लीह्ना वल्मीकान्क्लोम्ना गिरीन्प्लाशिभिः समुद्रमुदरेण वैश्वानरं भस्मना—२२ ) [ इंद्रस्यद्वाविꣳशतिः ] ॥१६॥ पूष्णोवनिष्ठुरंधाहेस्थूरगुदा सर्पान् गुदाभिरृतून्पृष्टीभिर्दिवं पृष्ठेन वसूनांप्रथमा कीकसा रुद्राणां द्वितीयादित्यानांतृतीयां गिरसां श्चतुर्थीसाध्यानां पंचमी विश्वेषां देवानाꣳ षष्ठी [ पूष्णाश्चतुर्विꣳशतिः ]॥ १७॥ ओजोग्रीवाभिर्निर्ऋतिमस्थभिरिंद्रꣳ स्वपसा वहेन रुद्रस्य विचलस्कंधोहोरात्रयोर्द्वितीयोर्धमासानां तृतीयोमासां श्चतुर्थऋतूनां पंचमः संवत्सरस्य षष्ठः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



—२० ) [ ओजोविꣳशतिः ॥ १८ ॥ आनंदं नंदथुना कामं प्रत्यासाभ्यां भयꣳ शितीमभ्यां प्रशिषं प्रशासाभ्याꣳ सूर्याचंद्रमसौ वृक्याभ्याꣳश्यामशबलौ मतस्नाभ्यां व्युष्टिꣳ रूपेण निम्रुक्तिमरूपेण—१६ ) [ आनंदꣳषोडश ]॥ १९ ॥ अहर्मांꣳसेन रात्रिं पीवसा पोयूषेणं घृतꣳ रसेन श्यांवसया दूषीकाभिर्ह्रादुनिमश्रुभिः पृष्वान्दिवꣳ रूपेण नक्षत्राणि प्रतिरूपेण पृथिवीं चर्मणा छवीं छव्योपाकृताय स्वाहा लब्धाय स्वाहा हुताय स्वाहा —२८ ) [ अहरष्टाविꣳशतिः ] ॥ २० ॥ अग्नेः पक्षतिः सरस्वत्यै निपक्षतिः सोमस्य तृतीयापां चतुर्थ्योषधीनां पंचमी संवत्सरस्य षष्ठी मरुताꣳ सप्तमी बृहस्पतेरष्टमी मित्रस्य नवमी वरुणस्य दशमींद्रस्यैकादशी विश्वेषां देवानां द्वादशी द्यावापृथिव्योः पार्श्वं यमस्यपाटूरः —२९ ) [ अग्नेरेकान्नत्रिꣳशत् ] ॥ २१ ॥ वायोः पक्षतिः सरस्वतोनिपक्षति श्चंद्रमसस्तृतीया नक्षत्राणां चतुर्थी सवितुःपंचमी रुद्रस्य षष्ठी सर्पाणाꣳ सप्तम्यर्यम्णोष्टमी त्वष्टुर्नवमी धातुर्दशमींद्राण्या एकादश्यदित्यै द्वादशी द्यावापृथिव्योः पार्श्वं यम्यै पाटूरः —२८ ) [ वायोरष्टाविꣳशतिः ]॥ २२ ॥ पंथामनूवृग्भ्याꣳ संततिꣳ स्नावन्याभ्याꣳ शुकान्पित्तेन हरिमाणं यक्ना हलीक्ष्णान्पापवातेन कूश्मान्छकभिः शवर्तानूवध्येन शुनोविशसनेन सर्पान्लोहितगंधेन वयाꣳसि पक्वगंधेन पिपीलिकाः प्रशादेन—२२ ) [ पंथांद्वाविꣳशतिः ] ॥ २३ ॥ क्रमैरत्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैः संविदानः । सनोनय सुकृतस्य लोकं तस्य ते वयꣳ स्वधया मदेम—१८ )

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



[ कूर्मैरष्टादश ] ॥ २४ ॥ द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मांतरिक्षꣳ समुद्रोयोनिः सूर्यस्ते चक्षुर्वातः प्राणश्चंद्रमाः श्रोत्रं मासाश्चार्धमासाश्च पर्वाण्यृतवोंगानि संवत्सरोमहिमा— २५ ) [ द्यौः पंचविꣳशतिः ) ॥ २५ ॥ अग्निः पशुरासीत्तेनायजंत सएतंलोकमजयद्यस्मिन्नग्निः सतें लोकस्तंजेष्यस्यथावजिघ्र वायुः पशुरासीत्तेनायजंत सएतंलोकमंजयद्यस्मिन्वायुः सतें लोकस्तस्मात्त्वांतरेष्यामि यदि नावजिघ्रस्यादित्यः पशुरासीत्तेनायजंत सएतंलोकमंजयद्यस्मिन् ( १ ) आदित्यः सतेंलोकस्तंजेष्यसि यद्यवजिघ्रसि—८ ) [ यस्मिन्नष्टौच ] ॥ २६ ॥ य ( १४८ ) स्त्वा ( २७५ ) मिंद्रस्य ( १९६ ) चित्तिं ( २०७ ) यथा ( ३४५ ) वयो ( ३०३ ) य ( १६४ ) द्या ( १६६ ( मयि ( २२५ ) प्रजापति ( १५० ) स्तेगान् ( २२ ) वाजं ( २५ ) कूर्मान् ( २३ ) योक्त्रं ( २१ ) मित्रावरुणा ( २२ ) विंद्रस्य ( २२ ) पूष्ण ( २४ ) ओजं ( २० ) आनंद ( १६ ) मह्नं ( २८ ) स्त्रग्ने ( २९ ) वायोः ( २८ ) पंथां ( २२ ) कूर्मै ( १८ ) द्यौः ( २५ ) रग्निः ( ५८ ) षड्विꣳशतिः ( २५९२ ) इतितैत्तिरीयसंहितायांपंचमकाण्डेसप्तमः प्रपाठकः ॥ सावित्राणि ( ३०८१ ) विष्णुमुखा ( ३१९५ ) उत्सन्नयज्ञो ( २४७७ ) देवासुरा ( २९०६ ) यदेकेन ( २७२७ ) हिरण्यवर्णा ( २४३६ ) योवा ( २५८२ ) सप्त ॥ ७ ॥ ( १९४०४ ) इतितैत्तिरीयसंहितायांपंचमकाण्डःसमाप्तः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्रीगणेशायनमः ॥ हरिः ओं ॥ प्राचीनवꣳशं करोति देवमनुष्यादिशोव्यंभजंत प्राचीन्देवाद-
क्षिणा पितरः प्रतीचीम्मनुष्याउदीचीꣳ रुद्रायत्प्राचीनवꣳशङ्करोति देवलोकमेव तद्यजमानउ-
पावर्तते परिश्रयत्यंतर्हितोहि देवलोकोमनुष्यलोकान्नास्माल्लोकात्स्वेतव्यमिवेत्याहुः कोहितद्वेद
यद्यमुष्मिन्लोकेस्तिवानवेति दिक्ष्वतीकाशान्करोति ( १ ) उभयोर्लोकयोरभिजित्यै केशश्मश्रुवपते
नखानि निकृन्तते मृतावा एषा त्वगमेध्या यत्केशश्मश्रुमृतामेव त्वचममेध्यामपहत्य यज्ञियो-
भूत्वा मेधमुपैत्यंगिरसः सुवर्गं लोकं यन्तोप्सुदीक्षातपसीप्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षा-
तपसी अवरुन्धे तीर्थे स्नाति तीर्थे हि तेतां प्रावेशयन्तीर्थे स्नाति ( २ ) तीर्थमेव समानानां
भवत्यपोश्नात्यंतरतएव मेध्योभवति वाससा दीक्षयति सौम्यं वै क्षौमं देवतया सोममेषदेवतामु-
पैति योदीक्षते सोमस्य तनूरसि तनुवं मे पाहीत्याह स्वामेव देवतामुपैत्यथो आशिषमेवैता-
माशास्तेग्नेस्तूषाधानं वायोर्वातपानं पितृणां नीविरोषधीनां प्रघातः ( ३ ) आदित्यानां प्राची-
नतानोविश्वेषान्देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा एतत्सर्वदेवत्यं यद्वासोयद्वाससा दीक्षयति
सर्वाभिरेवैनन्देवताभिर्दीक्षयति बहिः प्राणोवै मनुष्यस्तस्याशनं प्राणोश्नाति सप्राणएव दीक्षत-
आशितोभवति यावानेवास्य प्राणस्तेन सह मेधमुपैति घृतन्देवानांमस्तु पितृणां निष्पक्वम्म-
नुष्याणां तद्वै ( ४ ) एतत्सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्वाएव देवताः प्रीणाति
प्रच्युतोवा एषोस्माल्लोकादगतोदेवलोकं योदीक्षितोन्तरेव नवनीतं तस्मान्नवनीतेनाभ्यंक्तेनुलोमं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यजुषा व्यावृत्त्या इन्द्रो वृत्रमहन्तस्य कनीनिका परापतत्तदाञ्जनमभवद्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते दक्षिणम्पूर्वमाङ्क्ते (५) सव्यꣳ हि पूर्वं मनुष्या आञ्जते नानिधावतेनीवहि मनुष्या धावन्ते पञ्चकृत्व आङ्क्ते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे परिमितमाङ्क्ते परिमितꣳ हि मनुष्या आञ्जते सतूलयाङ्क्ते पतूलया हि मनुष्या आञ्जते व्यावृत्त्यै यदपतूलयाञ्जीत वज्र इव स्यात्सतूलयाङ्क्ते मित्रत्वाय (६) इन्द्रो वृत्रमहन्त्सो १ पो १ भ्यं म्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत्तदपोदक्रामत्ते दर्भा अभवन्यद्दर्भपुञ्जीलैः पवयति या एव मेध्या यज्ञियाः सदेवा आपस्ताभिरेवैनं पवयति द्वाभ्यां पवयत्यहोरात्राभ्यामेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयाति पञ्चभिः (७) पवयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवयति षड्भिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति सप्तभिः पवयति सप्त छन्दाꣳसि छन्दोभिरेवैनं पवयति नवभिः पवयति नव वै पुरुषे प्राणाः सप्राणमेवैनं पवयत्येकविꣳशत्या पवयति दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गम् (८) पवयति चित्पतिस्त्वा पुनात्वित्याह मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पतिस्त्वा पुनात्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैनं पवयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुनेतच्छकेयमित्याहा शिषमेवैतामाशास्ते—४८) [ करोति स्नाति प्रघातो वा आङ्क्ते मित्रत्वाय पंचभिरपरिवर्गमष्टाचत्वारिꣳशच्च] ॥१॥ यावन्तो वै देवा यज्ञायापुनत त एवाभवन् य एवं विद्वान् यज्ञाय

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पुनीते भवत्येव बहिः पवयित्वांतः प्रपादयति मनुष्यलोकएवैनं पवयित्वा पूतं देवलोकं प्रण-
यत्यदीक्षितएकयाहुत्येत्याहुः स्रुवेण चतस्रोजुहोति दीक्षितत्वाय स्रुचापञ्चमीं पंचाक्षरापंक्तिः
पांक्तोयज्ञोयज्ञमेवावरुन्ध आकूत्यै प्रयुजेग्नये (१) स्वाहेत्याहाकूत्या हि पुरुषोयज्ञमभिप्रयुंक्ते
यजेयेति मेधायै मनसेग्नये स्वाहेत्याह मेधयाहि मनसा पुरुषोयज्ञमभिगच्छति सरस्वत्यै
पूष्णेग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्यायज्ञं प्रयुंक्त आपोदेवीर्बृहती
र्विश्वशम्भुवइत्याह यावैवर्ष्यास्ताः (२) आपोदेवीर्बृहतीर्विश्वशम्भुवोयदेतद्यजुर्न ब्रूयाद्दि-
व्याआपोशान्ताइमं लोकमागच्छेयु रापोदेवीर्बृहतीर्विश्वशम्भुवइत्याहास्मा एवैनांलोकायशमय
ति तस्माच्छान्ताइमं लोकमागच्छन्ति द्यावापृथिवी इत्याह द्यावापृथिव्योर्हि यज्ञउर्वन्तरिक्षमि
त्याहान्तरिक्षेहि यज्ञोबृहस्पतिर्नोहविषावृधातु (३) इत्याह ब्रह्मवै देवानां बृहस्पतिर्ब्रह्मणैवा-
स्मै यज्ञमवरुन्धे यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणुमेव परिवृणक्ति प्रजाप-
तिर्यज्ञमसृजत सोस्मात्सृष्टः पराङैत्सप्रयजुरव्लीनात्प्रसामतमृगुदयच्छद्यदृगुदयच्छत्तदौद्ग्रहण
स्यौद्ग्रहणत्वमृचा (४) जुहोति यज्ञस्योद्यत्याअनुष्टुप्छंदसामुदयच्छदित्याहुस्तस्मादनुष्टुभा
जुहोति यज्ञस्योद्यत्यै द्वादश वात्सबन्धान्युदयच्छन्नित्याहुस्तस्माद्द्वादशभिर्वात्सबंधविदोदीक्षय
न्ति सा वा एषर्गनुष्टुग्वागनुष्टुग्यदेतयर्चा दीक्षयति वाचैवैनꣳ सर्वया दीक्षयति विश्वेदेवस्य
नेतुरित्याह सावित्र्येतेन मर्तोवृणीत सख्यं (५) इत्याह पितृदेवत्यैतेन विश्वे रायइषुध्यसीत्याह

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वैश्वदेव्यैतेन॑ द्युम्नं॑ वृणीत पुष्यस॒ इत्या॑ह पौष्ण्यैतेन॒ सा वा ए॒षर्क्स॑र्वदेव॒त्या॑ यदे॒तयर्चा॑ दी॒क्षय॑ति॒ सर्वा॑भिरे॒वैनं॑ दे॒वता॑भिर्दीक्षयति स॒प्ताक्ष॑रं प्रथ॒मं प॒दम॒ष्टाक्ष॑राणि॒ त्रीणि॒ यानि॒ त्रीणि॒ तान्यु॒ष्टावु॒प॑यन्ति॒ यानि॒ च॒त्वारि॒ तान्य॒ष्टौ यद॒ष्टाक्ष॑रा॒ तेन॑ ( ६ ) गा॒य॒त्री यदेका॑दशाक्षरा॒ तेन॑ त्रि॒ष्टुग्यद्द्वाद॑शाक्षरा॒ तेन॒ जग॑ती॒ सा वा ए॒षर्क्सर्वा॑णि॒ छन्दा॑ꣳसि यदे॒तयर्चा॑ दी॒क्षय॑ति॒ सर्वा॑भिरे॒वैनं॒ छन्दो॑भिर्दीक्षयति स॒प्ताक्ष॑रं प्रथ॒मं प॒दꣳ स॒प्तप॑दा॒ शक्व॑री प॒शवः॒ शक्व॑री प॒शूने॒-वाव॑रुन्ध॒ एक॑स्मादक्षरा॒दना॑प्तं प्रथ॒मं प॒दं तस्मा॒द्यद्वा॒चोना॑प्तं तन्म॑नु॒ष्या॑उप॑जीवन्ति पू॒र्णया॑ जुहोति ( ७ ) पू॒र्णइ॑व॒ हि प्र॒जाप॑तिः प्र॒जाप॑ते॒ राप्त्यै॒ न्यू॑नया जुहोति॒ न्यू॑ना॒द्धि प्र॒जाप॑तिः प्र॒जा अ॑सृजत प्र॒जाना॒ꣳ सृष्ट्यै॑— १५ ) [ अ॒ग्नये॒ताष्टधात्व॒चास॒रव्यं॑तेन॑जुहोति॒पंच॑दशच ] ॥ २ ॥

ऋ॒क्सा॒मे वै दे॒वेभ्यो॑य॒ज्ञाया॒ति॑ष्ठमा॒ने कृ॒ष्णो॑रू॒पं कृ॒त्वा प॒क्रम्या॑तिष्ठतां॒ तेऽ॑मन्यंत॒ यंवा इ॒मे उ॑पा-व॒र्त्स्यत॑ः स इ॒दं भ॑विष्य॒तीति॒ ते उ॒पाम॑न्त्रयन्त॒ ते अ॑होरा॒त्रयो॑र्महि॒मान॑मप॒नि॒धाय॑ दे॒वानु॒पाव॑र्त्ते-ता॒मेषवा ऋ॒चोव॒र्णो॒ यच्छु॒क्लं कृ॑ष्णाजि॒नस्यै॒ष साम्नो॒यत्कृ॒ष्णमृ॑क्सा॒मयो॑ः शि॒ल्पे॑स्थ॒इत्या॑हर्क्सा॒मे ए॒वाव॑रुन्ध॒ए॒षः (१) वा अन्हो॒वर्णो॒॑यच्छु॒क्लं कृ॑ष्णाजि॒नस्यै॒षरा॒त्रिया॒ यत्कृ॒ष्णं यदे॒वैन॑यो॒स्तत्र॒ न्य॑क्तं त॒दे॒वाव॑रुन्धे कृष्णाजि॒नेन॑ दीक्षयति॒ ब्रह्म॑णोवा ए॒तद्रू॒पं यत्कृ॑ष्णाजि॒नं ब्रह्म॑णै॒वैनं॑ दीक्षयती॒मां धिय॒ꣳ शिक्ष॑माणस्य दे॒वेत्या॑ह॒ यथा य॒जु॒रे॒वैतद्गर्भो॒वा ए॒षयद्दी॑क्षि॒तउल्बं॒वास॒ः प्रोर्णु॑ते॒ तस्मा॑त् ( २ ) गर्भा॒ः प्रावृ॑ताजायन्ते॒ न पु॒रा सोम॑स्य क्र॒याद॒पोर्ण्वी॑त॒ यत्पु॒रा सोम॑स्य क्र॒याद॒पोर्ण्वी॑त॒ गर्भा॑ः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रजानां परापातुकाः स्युः क्रीते सोमेपोर्णुते जायतएव तदथो यथा वसीयाꣳसं प्रत्यपोर्णुते तादृगेव तदंगिरसः सुवर्गं लोकं यन्तऊर्जं व्यभजन्त ततोयदत्यशिष्यत ते शराअभवन्नूर्ग्वै शरायच्छरमयी (३) मेखलाभवत्यूर्जमेवावरुन्धे मध्यतः सन्नह्यति मध्यतएवास्माऊर्जं दधाति तस्मान्मध्यतऊर्जा भुंजतऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यतः सन्नह्यति मेध्यं चैवास्यामेध्यं चव्यावर्तयतीन्द्रोवृत्राय वज्रं प्राहरत्सत्रेधा व्यभवत्स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं (४) येन्तःशराअशीर्यन्तते शराअभवन्तच्छराणाꣳ शरत्वं वज्रोवै शराः क्षुत्खलु वैमनुष्यस्य भ्रातृव्योयच्छरमयी मेखला भवति वज्रेणैव साक्षात्क्षुधं भ्रातृव्यं मध्यतोपहते त्रिवृद्भवति त्रिवृद्वैप्राणस्त्रिवृतमेव प्राणं मध्यतोयजमाने दधाति पृथ्वीभवति रज्जूनां व्यावृत्त्यै मेखलयायजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय (५) यज्ञोदक्षिणामभ्यध्यायत्ताꣳ समभवत्तदिन्द्रोचायत्सोमन्यत योवा इतोजनिष्यते सइदं भविष्यतीति तां प्राविशत्तस्या इन्द्रएवाजायत सोमन्यत योवै मदितोपरोजनिष्यते सइदं भविष्यतीति तस्या अनुमृश्य योनिमाच्छिनत्सासूतवशाभवतत्सूतवशायै जन्म (६) ताꣳ हस्ते न्यवेष्टयत तां मृगेषु न्यदधात्सा कृष्णविषाणाभवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्णविषाणांप्रयच्छति सयोनिमेव यज्ञंकरोति सयोनिन्दक्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय कृष्यै त्वा सुसस्याया इत्याह तस्मादकृष्टपच्याओषधयः पच्यन्ते सुपिप्पलाभ्यस्त्वौषधीभ्यइत्याह तस्मादोषधयः फलं गृह्णन्ति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यद्धस्तेन ( ७ ) कंडूयेतपामनंभावुकाः प्रजास्युर्यत्स्मयेत नग्नम्भावुकाः कृष्णविषाणया कण्डूयतेपिगृह्य स्मयते प्रजानाङ्गोपीथाय न पुरादक्षिणाभ्योनेतोः कृष्णविषाणामवचृतेद्यत्पुरा दक्षिणाभ्योनेतोः कृष्णविषाणामवचृतेद्योनिः प्रजानाम्परापातुका स्यान्नीतासु दक्षिणासु चात्वाले कृष्णविषाणाम्प्रास्यति योनिर्वै यज्ञस्य चात्वालं योनिः कृष्णविषाणा योनावेव योनिं दधाति यज्ञस्य सयोनित्वाय —४८ ) [ एषतस्माच्छरमयीतृतीयंमिथुनत्वायजन्मुहस्तेनाष्टाचत्वारिंशच्च ] ॥ ३ ॥ वाग्वै देवेभ्योपाक्रामद्यज्ञायातिष्ठमाना सा वनस्पतीन्प्राविशत्सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ यातूणवे या वीणायां यद्दीक्षितदण्डंप्रयच्छति वाचमेवावरुन्धऔदुम्बरोभवत्यूर्ग्वा उदुम्बरऊर्जमेवावरुन्धे मुखेन सम्मितोभवति मुखतएवास्माऊर्जन्दधाति तस्मान्मुखतऊर्जाभुञ्जते ( १ ) क्रीते सोमे मैत्रावरुणाय दण्डंप्रयच्छति मैत्रावरुणोहि पुरस्तादृत्विग्भ्योवाचं विभजति तामृत्विजोयजमाने प्रतिष्ठापयन्ति स्वाहा यज्ञं मनसेत्याह मनसा हि पुरुषोयज्ञमभिगच्छति स्वाहा द्यावापृथिवीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञः स्वाहोरोरन्तरिक्षादित्याहान्तरिक्षे हि यज्ञः स्वाहा यज्ञं वातादारभ इत्याहायं ( २ ) वाव यः पवते सयज्ञस्तमेव साक्षादारभते मुष्टीकरोति वाचं यच्छति यज्ञस्य धृत्या अदीक्षिष्टायं ब्राह्मणइति त्रिरुपांश्वाह देवेभ्यएवैनं प्राह त्रिरुच्चैरुभयेभ्यएवैनं देवमनुष्येभ्यः प्राहन पुरानक्षत्रेभ्योवाचं विसृजेद्यत्पुरा नक्षत्रेभ्योवाचं विसृजेद्यज्ञं विच्छिंद्यात् ( ३ ) उदितेषु नक्षत्रेषु व्रतं-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कृणुते तिवाचं विसृजति यज्ञव्रतोवै दीक्षितोयज्ञमेवाभिवाचं विसृजति यदिविसृजेद्वैष्णवी
मृचमनुब्रूयाद्यज्ञोवै विष्णुर्यज्ञेनैव यज्ञꣳ सन्तनोति दैवीन्धियं मनामहइत्याह यज्ञमेव तन्म्रदयति
सुपारानोअसद्वशइत्याह व्युष्टिमेवावरुन्धे (४) ब्रह्मवादिनोवदन्ति होतव्यन्दीक्षितस्य गृहा ३
इनहोतव्या ३ मिति हविर्वै दीक्षितोयज्जुहुयाद्यजमानस्यावदाय जुहुयाद्यन्नजुहुयाद्यज्ञपरुरन्त-
रियाद्ये देवामनोजातामनोयुजइत्याह प्राणावै देवामनोजाता मनोयुजस्तेष्वेव परोक्षं जुहोति
तन्नेव हुतं नेवाहुतꣳ स्वपन्तं वै दीक्षितꣳ रक्षाꣳसि जिघाꣳसन्त्यग्निः (५) खलु वै रक्षोहाग्ने
त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहीत्याहाग्निमेवाधिपाङ्कृत्वा स्वपिति रक्षसामपहत्या अव्रत्य-
मिव वा एषकरोति योदीक्षितःस्वपिति त्वमग्ने व्रतपाअसीत्याहाग्निर्वै देवानां व्रतपतिः सएवैनं
व्रतमालम्भयति देवआमर्त्येष्वेत्याह देवः (६) ह्येषसन्मर्त्येषु त्वं यज्ञेष्वीड्यइत्याहुतꣳ हि यज्ञे-
ष्वीडते पवै दीक्षितात्सुषुपुषइन्द्रियं देवताः कामन्ति विश्वेदेवाअभिमामाव वृत्रन्नित्याहेन्द्रियेणै-
वैनन्देवताभिः सन्नयति यदेतद्यजुर्न ब्रूयाद्यावतएव पशूनभिदीक्षेत तावन्तोस्य पशवः स्युरा-
स्वेयत् (७) सोमाभूयोभरेत्याहापरिमितानेव पशूनवरुन्धे चन्द्रमसि मम भोगाय भवेत्याह
यथा देवतमेवैनाः प्रतिगृह्णाति वायवे त्वा वरुणाय त्वेति यदेवमेतानानुदिशेदयथादेवतन्दक्षि-
णागमयेदादेवताभ्योवृश्च्येत यदेवमेताअनुदिशति यथादेवतमेव दक्षिणागमयति न देवताभ्य-
आ (८) वृश्च्यते देवीरापोअपान्नपादित्याह यद्वोमेध्यं यज्ञियꣳ सदेवन्तद्वोमावक्रमिषमिति वा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





वैतदाहाच्छिन्नन्तन्तुं म्पृथिव्याअनुगेषमित्याह सेतुमेव कृत्वात्येति ( ३३ ) [ भुंजतेयांछिंद्याद्रुंधेऽग्निर्देवइयदात्रयंस्त्रिंशच्च ] ॥ ४ ॥ देवावै देवयजनमध्यवसाय दिशोन प्राजानन्तेन्यो१न्यमुपाधावन्त्वया प्रजानाम त्वयेति ते दित्याᳪं सममध्रियन्त त्वया प्रजानामेति साब्रवीद्वरं वृणै मत्प्रायणाएव वोयज्ञामदुदयनाअसन्निति तस्मादादित्यः प्रायणीयोयज्ञानामादित्यउदयनीयः पञ्च देवतायजति पञ्च दिशोदिशाम्प्रज्ञात्यै ( १ ) अथो पञ्चाक्षरापङ्क्तिः पाङ्क्तोयज्ञोयज्ञमेवाव रुन्धे पथ्याᳪं स्वस्तिमयजन्प्राचीमेव तया दिशम्प्राजानन्नग्निना दक्षिणा सोमेन प्रतीचीᳪं सवित्रोदीचीमदित्योर्ध्वाम्पथ्याᳪं स्वस्तिं यजति प्राचीमेव तया दिशम्प्रजानाति पथ्याᳪं स्वस्तिमिष्ट्वाग्नीषोमौ यजति चक्षुषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानुपश्यति ( २ ) अग्नीषोमाविष्ट्वा सवितारं यजति सवितृप्रसूतएवानुपश्याति सवितारमिष्ट्वादितिं यजतीयं वा अदिति रस्यामेव प्रतिष्ठायानुपश्यत्यदितिमिष्ट्वामारुतीमृचमन्वाह मरुतोवै देवानां विशोदेवविशं खलु वै कल्पमानं मनुष्यविशमनुकल्पते यन्मारुतीमृचमन्वाह विशां कॢप्त्यै ब्रह्मवादिनोवदन्ति प्रयाजवदननूयाजं प्रायणीयङ्कार्यमनूयाजवत् ( ३ ) अप्रयाजमुदयनीयमितीमेवै प्रयाजाअमी अनूयाजाः सैवसायज्ञस्य सन्ततिस्तत्तथा न कार्यमात्मावै प्रयाजाः प्रजानूयाजा यत्प्रयाजानन्तरियादात्मानमन्तरियाद्यदनूयाजानन्तरियात्प्रजामन्तरियाद्यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः पराभवति यज्ञम्पराभवन्तं यजमानोनु (४) पराभवति प्रयाजवदेवानूयाजवत्प्रायणीयं कार्यं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रयाजवं दनूयाजवदुदयनीयन्नात्मानमन्तरेति न प्रजां न यज्ञः पराभवति न यजमानः प्रायणीय-स्य निष्कासउदयनीयमभिनिर्वपति सैवसा यज्ञस्य सन्ततिर्याः प्रायणीयस्य याज्यायत्ताउदयनी-यस्य याज्याः कुर्यात्पराङ्मुं लोकमारोहेत्प्रमायुकः स्याद्याः प्रायणीयस्य पुरोनुवाक्यास्ताः ( ५ ) उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रतितिष्ठति— ( ८ ) [ यज्ञात्यैपश्यत्यनूयाजव दनुताअष्टौच ] ॥ ५ ॥ कद्रूश्चवै सुपर्णीचात्मरूपयोरस्पर्धेतां सा कद्रूः सुपर्णीमजयत्सा ब्रवीत्तृतीयस्यामितोदिवि सोमस्तमाहरतेनात्मानं निष्क्रीणीष्वेतीयं वै कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेयाः साब्रवीदस्मै वै पितरौ पुत्रान्बिभृतस्तृतीयस्यामितोदिवि सोमस्तमाहरते नात्मान न्निष्क्रीणीष्व ( १ ) इति माकद्रूरवोचदिति जगत्युदपतच्चतुर्दशाक्षरासती सा प्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमी ये तां सापशुभिश्चदीक्षया चागच्छत्तस्माज्जगती छन्दसां पशव्यतमा तस्मात्पशुमन्तं दीक्षोपनमति त्रिष्टुगुदपतत्त्रयोदशाक्षरा सती सा प्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमी ये तां सा दक्षिणाभिश्च ( २ ) तपसा चागच्छत्तस्मात्त्रिष्टुभोलोके माध्यन्दिने सवने दक्षिणानीयन्तएतत्खलु वाव तपइत्याहुर्यः स्वन्ददातीति गायत्र्युदपतच्चतुरक्षरा सत्यजयाज्यो-तिषा तमस्याअजाभ्यरुन्धतदजायाअजत्वं सा सोमं चाहरच्चत्वारि चाक्षराणि साष्टाक्षरा समपद्यत ब्रह्मवादिनोवदन्ति ( ३ ) कस्मात्सत्याद्गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं परीयायेति यदेवादः सोममाहरत्तस्माद्यज्ञमुखं पर्यैत्तस्मात्तेजस्विनीतमापद्भ्यां द्वे सवने समगृह्णा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्मुखेनैकं यन्मुखेन समगृह्णात्तदधयत्तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च तस्मात्तृतीयसवनऋजीषमभिषुण्वंति धीतमिव हि मन्यन्ते ( ४ ) आशिरमवनयतिसशुक्रत्वायाथो सम्भरत्येवैनत्तꣳ सोममाह्रियमाणं गन्धर्वोविश्वावसुः पर्यमुष्णात्सतिस्रोरात्रीः परिमुषितोवसत्तस्मात्तिस्रोरात्रीः क्रीतः सोमोवसति ते देवाअब्रुव न्त्स्त्रीकामावै गन्धर्वाःस्त्रियानिष्क्रीणामेति ते वाचꣳ स्त्रियमेकहायनींकृत्वा तया निरक्रीणन्त्सारोहिद्रूपंकृत्वा गन्धर्वेभ्यः ( ५ ) अपक्रम्यातिष्ठत्तद्रोहितोजन्म ते देवाअब्रुवन्नपयुष्मदक्रमीन्नास्मानुपावर्तते विह्वयामहाइति ब्रह्मगन्धर्वाअवदन्नगायन्देवास्सादेवान्गायत उपावर्तत तस्माद्गायन्तꣳ स्त्रियः कामयन्ते कामुका एनꣳ स्त्रियोभवन्तियएवं वेदाथो यएवं विद्वानपि जन्येषु भवति तेभ्यएव ददत्युत यद्बहु तयाः ( ६ ) भवन्त्येकहायन्याक्रीणाति वाचैवैनꣳ सर्वया क्रीणाति तस्मादेकहायनामनुष्यावाचं वदन्त्यकूटया कर्ण्या काणया श्लोणया संप्तशफया क्रीणाति सर्वयैवैनं क्रीणाति यच्छ्वेतया क्रीणीयाद्दुश्चर्मा यजमानस्स्याद्यत्कृष्णयानुस्तरणीस्यात्प्रमायुकोयजमानः स्याद्यद्विरूपया वार्त्रघ्नी स्यात्सवान्य जिनीयात्तं वान्योजिनीयादरुणया पिंगाक्ष्या क्रीणात्येतद्वै सोमस्य रूपꣳ स्वयैवैनन्देवतया क्रीणाति ( १० ) [ क्रीणीष्वचवदंतिमन्यंतेगंधर्वेभ्योबहुतयाःपिंगाक्ष्यादशच ] ॥ ६ ॥ तद्धिरण्यमभवत्तस्मादद्भ्योहिरण्यं पुनन्ति ब्रह्मवादिनोवदन्ति कस्मात्सत्यादनस्थिकेन प्रजाः प्रवीयन्ते ऽस्थन्वतीर्जायन्तइति यद्धिरण्यं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हायन्या सोमं क्रीणीयाद्य एवं विद्वान्रोहिण्या पिंगलयैकहायन्या सोमं क्रीणाति त्रयस्त्रिꣳशता चै-
वास्यै त्रिभिश्च (२) शतैः सोमः क्रीतो भवति सुक्रीतेन यजते तामप्सु प्रावेशयन्निन्द्रायोदेहीति
सा रोहिणी लक्ष्मणा पष्ठौही वार्त्रघ्नी रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैः सहोदैत्तस्माद्रोहि-
णीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं दद्याद्य एवं विद्वान्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं ददाति त्रयस्त्रिꣳ
शच्चैवास्य त्रीणि च शतानि सा दत्ता (३) भवति तामप्सु प्रावेशयन्यमायोदेहीति सा जरती मूर्खा
तज्जघन्या रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैः सहोदैत्तस्माज्जरतीं मूर्खां तज्जघन्या
मनुस्तरणीं कुर्वीत य एवं विद्वाञ्जरतीं मूर्खां तज्जघन्यामनुस्तरणीं कुरुते त्रयस्त्रिꣳशच्चैवास्य
त्रीणि च शतानि सामुष्मिंल्लोके भवति वागेव सहस्रतमी तस्मात् (४) वरो देयः सा हि वरः
सहस्रमस्य सा दत्ता भवति तस्माद्वरो न प्रतिगृह्यः सा हि वरः सहस्रमस्य प्रतिगृहीतं भवतीयं वर इति
ब्रूयादथान्यां ब्रूयादियं ममेति तथास्य तत्सहस्रमप्रतिगृहीतं भवत्युभयत एनी स्यात्तदाहुरन्यत एनी
स्यात्सहस्रं परस्तादेतमिति यैव वरः (५) कल्याणी रूपसमृद्धा सा स्यात्सा हि वरः समृध्यै-
तामुत्तरेणाग्नीध्रं पर्याणीयाहवनीयस्यान्ते द्रोणकलशमवघ्रापयेदाजिघ्र कलशं मह्युरुधारा पयस्वत्या-
त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति
प्रजयैवैनं पशुभी रय्या सम् (६) अर्धयति प्रजावान्पशुमान्रयिमान्भवति य एवं वेद तया सहाग्नी-
ध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादुभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इंद्रश्च विष्णोयदपंस्पृधेथां त्रेधा सहस्रं वितदैरयेथामिति त्रेधा विभक्तं वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनां करोति सहस्रस्यैवैनां मात्रां ( ७ ) करोति रूपाणि जुहोति रूपैरेवैनाꣳ समर्धयति तस्या उपोत्थाय कर्णमाजपेदिडेरंतेदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्न्ये नामानि सुकृतं मादेवेषु ब्रूतादिति देवेभ्य एवैनमावेदयत्यन्वेनं देवाबुध्यंते — ३९ ) [ वीर्यं च दत्तात स्माद्दरः संमात्रामेकान्नचत्वारिꣳशच्च ] ॥ ६ ॥ सहस्रतम्या वै यजमानः सुवर्गं लोकमेति सैनꣳ सुवर्गं लोकं गमयति सामा सुवर्गं लोकं गमयेत्याह सुवर्गमेवैनं लोकं गमयति सामा ज्योतिष्मंतं लोकं गमयेत्याह ज्योतिष्मंतमेवैनं लोकं गमयति सामा सर्वान्पुण्यांल्लोकान्गमयेत्याह सर्वानेवैनं पुण्यांल्लोकान्गमयति सा ( १ ) मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति प्रजयैवैनं पशुभीरय्यां प्रतिष्ठापयति प्रजावान्पशुमान्रयिमान्भवति यएवं वेदतामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाध्वर्यवे वादद्यात्सहस्रमस्य सादत्ता भवति सहस्यमस्य प्रतिगृहीतं भवति यस्तामविद्वान् ( ३ ) प्रतिगृह्णाति तां प्रतिगृह्णीयादेकासिनसहस्रमेका त्वाभूतां प्रतिगृह्णामि न सहस्रमेकामाभूताविशमा सहस्रमित्येकामेवैनां भूतां प्रतिगृह्णाति न सहस्रं यएवं वेद स्योनासि सुषदासुशेवा स्योनामाविशसुषदामाविश सुशेवामाविश ( ३ ) इत्याह स्योनैवैनꣳ सुषदा सुशेवा भूताविशतिनैनꣳ हिनस्ति ब्रह्मवादिनोवदंति सहस्रꣳ सहस्रतम्यन्वेती३संहस्रतमीꣳ सहस्रा३मिति यत्प्राचीमुत्सृजेत्सहस्रꣳ सहस्रतम्यन्वियात्तत्सहस्रमप्रज्ञात्रꣳ सुवर्गं लोकं न प्रजानीयात्प्रतीचीमु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्सृंजति॒ता२ऀ स॒हस्र॒मनु॒प्र॒यीवर्त॑ते साभ॑जान॒ती सु॑व॒र्गंलो॒कमे॑ति॒ यज॑मानम् ( ४ ) अ॒भ्यु॒त्सृंजति॒ क्षि॒प्रे-
स॒हस्रं॑ प्रजा॑यत॒उत्त॒मा॒नीयते॑ प्रथ॒मा दे॒वान्ग॑च्छति — १२) [ सा॒ऽवि॒द्वान्वि॒श॒यज॑मा॒न॑द्वाद॑शच ] ॥७॥
अत्रि॒रद॑दा॒दौर्वा॑य प्र॒जां पु॒त्रका॑माय॒ सरि॑रिचा॒नो॑मन्यत॒निर्वी॒र्यः॑ शि॒थि॒लो॒या॒तया॑मा॒स ए॒तं च॑तूरा॒त्र
म॑पश्य॒त्तमाह॑र॒त्तेना॑यजत॒ ततो॒वै तस्य॑ च॒त्वारो॑वी॒राआजा॑यंत॒ सु॒हो॑ता॒ सू॒द्गा॑ता॒ स्व॑ध्वर्यु॒ः सु॒स॑भेयो॒
यए॒वं वि॒द्वा२ऀश्च॑तूरा॒त्रेण॒ यज॑त॒आस्य॑ च॒त्वारो॑वी॒राजा॑यंते सु॒हो॑ता॒ सू॒द्गा॑ता॒ स्व॑ध्वर्यु॒ः सु॒स॑भेयो॒येच-
तु॒र्वि॒२ऀशाः॑ पव॑माना॒ब्रह्म॑वर्च॒सं तत् ( १ ) य॒उद्यंत॒स्तोमा॒श्रीः सात्रि॒२ऀ श्र॒द्धादे॑वं॒ यज॑मानं॒ च॒त्वारि॑
वी॒र्या॑णि॒ नोपा॑नम॒न्तेज॑इंद्रि॒यं ब्र॑ह्मवर्च॒सम॒न्नाद्य॒२ऀ सए॒ता२ऀश्च॒तुर॒श्च॒तु॒ष्टोमा॒न्त्सोमा॑नपश्य॒त्ताना॑हर॒त्तै
र॑यजत॒ तेज॑ए॒व प्र॑थ॒मेना॑वारुं॒धेंद्रि॒यं द्वि॒ती॒येन ब्रह्मवर्च॒सं तृ॒तीये॑ना॒न्नाद्यं॒ च॒तु॒र्थे॑न॒ यए॒वं वि॒द्वा२ऀश्च-
तु॒र॒श्च॒तु॒ष्टोमा॒न्त्सोमा॑न्ना॒हर॑ति॒ तैर्यज॑ते॒ तेज॑ए॒व ( २ ) प्र॑थ॒मेना॑वरुं॒धइंद्रि॒यं द्वि॒तीये॑न ब्रह्मवर्च॒सं तृ॒तीये॑-
ना॒न्नाद्यं॑ च॒तु॒र्थे॑न॒ यामे॒वात्रि॒र्ऋ॒द्धिमार्ध्नो॒त्तामे॒व यज॑मानऋध्नोति — १८ ) [ तदे॒वाष्टाद॑शच ] ॥ ८॥
ज॒मद॑ग्निः पु॒ष्टिका॑मश्चतूरा॒त्रेणा॑यजत॒ सए॒तान्पोषा॒२ऀ अपु॒ष्य॒त्तस्मा॒त्पलि॒तौ॒ जाम॑दग्नियौ॒ न संजा
नाते॒ ए॒ताने॒व पोषा॒न्पुष्यति॒ यए॒वं वि॒द्वा२ऀश्च॑तूरा॒त्रेण॒ यज॑ते पुरोडा॒शिन्य॑उप॒सदो॑भवंति प॒शवो॒वै पु॒-
रो॒डाशः॑ प॒शूने॒वाव॑रुं॒धेन्नं॑ वै पु॑रो॒डाशो॒न्नमे॒वाव॑रुंधे॒न्नादः॑ प॒शु॒मान्भ॑वति॒ यए॒वं वि॒द्वा२ऀश्च॑तूरा॒त्रेण॒ य-
ज॑ते — ४८ ) [ ज॒मद॑ग्नि॒रष्टाच॑त्वारि॒२ऀशत् ] ॥ ९ ॥ सं॒व॒त्स॒रो॑वा इ॒दमेक॑आसी॒त्सो॑कामयत॒र्तू॒-
न्त्सृंजे॒येति॒ सए॒तं पँचरा॒त्रम॑पश्य॒त्तमाह॑र॒त्तेना॑यजत॒ ततो॒वै सऋ॒तूनसृजत॒ यए॒वं वि॒द्वान्पँचरा॒त्रेण॒

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यजते प्रैव जायते तऋतवः सृष्टानव्यावर्तन्त तएतं पंचरात्रमपश्यन्तमाहरन्तेनायजन्त ततोवै ते-
न्यावर्तन्त (१) यएवं विद्वान्पंचरात्रेण यजते विपाप्मना भ्रातृव्येणावर्तते सार्वसेनिः शौचेयो-
कामयत पशुमान्त्स्यामिति सएतं पंचरात्रमाहरत्तेनायजत ततोवै ससहस्रं पशून्प्राप्नोद्यएवं वि-
द्वान् पंचरात्रेण यजते प्रसहस्रं पशूनाप्नोति बबरः प्रावाहणिरकामयत वाचः प्रवदितास्यामिति
सएतं पंचरात्रमा (२) अहरत्तेनायजत ततोवै सवाचः प्रवदिताभवद्यएवं विद्वान्पंचरात्रेण य-
जते प्रवदितैव वाचोभवत्यथो एनं वाचस्पतिरित्याहुरनाप्तश्चतूरात्रोतिरिक्तः षड्रात्रोथवा एषसंप्रति-
यज्ञोयत्पंचरात्रोयएवं विद्वान्पंचरात्रेण यजते संप्रत्येव यज्ञेन यजते पंचरात्रोभवति पंचवा ऋत-
वः संवत्सरः (३) ऋतुष्वेव संवत्सरे प्रतितिष्ठत्यथो पंचाक्षरा पङ्क्तिः पाङ्क्तोयज्ञोयज्ञमेवावरुंधे
त्रिवृदग्निष्टोमोभवति तेजएवावरुंधे पंचदशोभवतींद्रियमेवावरुंधे सप्तदशोभवत्यन्नाद्यस्यावरु-
ध्याअथो प्रैव तेन जायते पंचविंशोग्निष्टोमोभवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्याव-
रुध्यै विश्वजित्सर्वपृष्ठोतिरात्रोभवति सर्वस्याभिजित्यै —४ ) [ न्यावर्तन्तासंवत्सरोऽभि-
जित्यै ]. ॥ १० ॥ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामाददं-
इमामगृभ्णन्रशनामृतस्य पूर्वआयुषिविदथेषुकव्यातया देवाः सुतमाबभूवुर्ऋतस्य सामन्त्सर-
मारपंती । अभिधाअसि भुवनमसि यंतासि धर्तासि सोग्निं वैश्वानरꣳ सप्रथसंगच्छ स्वाहा-
कृतः पृथिव्यां यंताराड्यंतासियमनोधर्तासि धरुणः (१) कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वा पृथिव्यै त्वांतरिक्षाय त्वा दिवेत्वा सते त्वा संते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः — २५ ) [ धरुणःपंचविꣳशतिश्च ] ॥ ११ ॥ विभूर्मात्रा प्रभूः पित्राश्वोसि हयोस्यत्योसि-नरोस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणाअसि ययुर्नामास्यादित्यानां पत्वान्विह्यग्नये स्वाहा स्वाहेंद्राग्निभ्याꣳ स्वाहा प्रजापतये स्वाहा विश्वेभ्योदेवेभ्यः स्वाहा सर्वाभ्योदेवताभ्यइह धृतिः स्वाहेहविधृतिः स्वाहेहरंतिः स्वाहा ( १ ) इहरमतिः स्वाहा भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्योदेवाआशापालाएतं देवेभ्योश्वं मेधायप्रोक्षितं गोपायत — २२ ) [ रंतिःस्वाहाद्वाविꣳशतिश्च ] ॥ १२ ) आयनाय स्वाहा प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वा-हाशूकाराय स्वाहाशूकृताय स्वाहापलायिताय स्वाहापलायिताय स्वाहाऽऽवल्गते स्वाहापरावल्गते स्वाहा यते स्वाहा प्रयते स्वाहा सर्वस्मै स्वाहा — २६ ) [ आयनायषड्विꣳशतिः ] ॥१३॥ अग्नये स्वाहा सोमाय स्वाहा वायवे स्वाहापांमोदाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहेंद्राय स्वाहा बृहस्पतये स्वाहामित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा — २३ ) [ अग्नयेत्रयोविꣳशतिः ] ॥१४॥ पृथिव्यै स्वाहांतरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चंद्रमसे स्वाहा नक्षत्रेभ्यः स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहा दिग्भ्यः स्वाहावांतरदिशाभ्यः स्वाहा समाभ्यः स्वाहा शरद्भ्यः स्वाहाहोरात्रेभ्यः स्वाहा-र्धमासेभ्यः स्वाहा मासेभ्यः स्वाहर्तुभ्यः स्वाहासंवत्सराय स्वाहा सर्वस्मै स्वाहा — ४७ ) [ पृथि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यैसप्तचत्वारिꣳशत् ] ॥ १५ ॥ अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहापांमोदाय स्वाहा वायवे स्वाहा मित्राय स्वाहा वरुणाय स्वाहा सर्वस्मै स्वाहा—२३ ) [ अग्नयेत्रयोविꣳशतिः ] ॥ १६ ॥ पृथिव्यै स्वाहांतरिक्षाय स्वाहा दिवे स्वाहाग्नये स्वाहा सोमाय स्वाहा सूर्याय स्वाहा चंद्रमसे स्वाहाह्नेस्वाहा रात्रियै स्वाहर्जवे स्वाहा साधवे स्वाहा सुक्षित्यै स्वाहा क्षुधे स्वाहा शितिम्ने स्वाहा रोगाय स्वाहा हिमाय स्वाहा शीताय स्वाहातपाय स्वाहारण्याय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा—४४ ) [ पृथिव्यैचतुश्चत्वारिꣳशत् ) ॥ १७ ॥ भुवोदेवानां कर्मणापसर्तस्य पथ्यासि वसुभिर्देवेभिर्देवत-या गायत्रेण त्वाछंदसा युनज्मि वसंतेनत्वतुना हविषादीक्षयामि रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा छंदसा युनज्मि ग्रीष्मेणत्वतुना हविषा दीक्षयाम्यादित्येभिर्देवेभिर्देवतया जागतेन त्वा छंदसा युनज्मि वर्षाभिस्त्वतुना हविषादीक्षयामि विश्वेभिर्देवेभिर्देवतयानुष्टुभेन त्वा छंदसा युनज्मि ( १ ) शरदात्वतुना हविषा दीक्षयाम्यंगिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छंदसा युनज्मि हेमंताशिशिरा-भ्यां त्वतुना हविषा दीक्षयाम्याहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छंदसा ब्रह्मणा चर्तꣳसत्ये-धाꣳ सत्यमृते धाम् । महीमूषु सुत्रामाणमिह धृतिः स्वाहेहविधृतिः स्वाहेहरंतिः स्वाहेहरमतिः स्वा-हा— ४९ ) [ युनज्म्येकान्नपंचाशच्च ] ॥ १८ ॥ ईंकाराय स्वाहेंकृताय स्वाहाक्रंदते स्वा-हावक्रंदते स्वाहा प्रोथते स्वाहा प्रप्रोथते स्वाहा गंधाय स्वाहा घ्राताय स्वाहा प्राणाय स्वाहा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्या॒नाय॒ स्वाहा॑पा॒नाय॒ स्वाहा॑ संदी॒यमा॑नाय॒ स्वाहा॑ संदि॑ताय॒ स्वाहा॑ विचृ॒त्यमा॑नाय॒ स्वाहा॑ विचृ॑ताय॒ स्वाहा॑ पलायि॒ष्यमा॑णाय॒ स्वाहा॑ पला॑यिताय॒ स्वाहो॑परꣳस्य॒ते स्वाहोप॑रताय॒ स्वाहा॑ निवे॒क्ष्य॒ते स्वाहा॑निवि॒शमा॑नाय॒ स्वाहा॑निवि॑ष्टाय॒स्वाहा॑निषत्स्य॒ते स्वाहा॑ नि॒षीद॑ते॒ स्वाहा॑ निष॑ण्णाय॒ स्वाहा॑ (१०) आ॒सि॒ष्य॒ते स्वाहासी॑नाय॒ स्वाहा॑ सि॒ताय॒ स्वाहा॑ निपत्स्य॒ते स्वाहा॑ नि॒पद्य॑मानाय॒ स्वाहा॑निप॑न्नाय॒ स्वाहा॑ शयिष्य॒ते स्वाहा॑ शया॑नाय॒ स्वाहा॑ श॒यि॒ताय॒ स्वाहा॑ संमीलिष्य॒ते स्वाहा॑ सं॒मील॑ते॒ स्वाहा॑ संमी॑लिताय॒ स्वाहा॑ स्वप्स्य॒ते स्वाहा॑ स्वप॒ते स्वाहा॑ सु॒प्ताय॒ स्वाहा॑ प्रभोत्स्य॒ते स्वाहा॑ प्र॒बुध्य॑मानाय॒ स्वाहा॑ प्रबु॑द्धाय॒ स्वाहा॑ जागरिष्य॒ते स्वाहा॑ जाग्र॑ते॒ स्वाहा॑ जाग॑रि॒ताय॒ स्वाहा॑ शुश्रू॒षमा॑णाय॒ स्वाहा॑ शृ॒ण्व॒ते स्वाहा॑ श्रु॒ताय॒ स्वाहा॑ वीक्षिष्य॒ते स्वाहा॑ (२) वी॒क्षमा॑णाय॒ स्वाहा॑ वी॒क्षि॒ताय॒ स्वाहा॑ सꣳहास्य॒ते स्वाहा॑ सं॒जिहा॑नाय॒ स्वाहो॒ज्जिहा॑नाय॒ स्वाहा॑ वि॒वर्त्स्य॒ते स्वाहा॑वि॒वर्त॑मानाय॒ स्वाहा॑ विवृ॑त्ताय॒ स्वाहो॑त्थास्य॒ते स्वाहो॒त्तिष्ठ॑ते॒ स्वाहो॑त्थि॒ताय॒ स्वाहा॑ विधविष्य॒ते स्वाहा॑ विधू॒न्वा॒नाय॒ स्वाहा॑ विधू॑ताय॒ स्वाहो॑त्क्रꣳस्य॒ते स्वाहो॒त्क्राम॑ते॒ स्वाहो॒त्क्रा॑न्ताय॒ स्वाहा॑चंक्रमिष्य॒ते स्वाहा॑ च॒ङ्क्रम्य॑माणाय॒ स्वाहा॑चंक्र॒मि॒ताय॒ स्वाहा॑ कंडूयिष्य॒ते स्वाहा॑ कंडूय॑मानाय॒ स्वाहा॑ कंडूयि॒ताय॒ स्वाहा॑निक्रषिष्य॒ते स्वाहा॑ नि॒कष॑माणाय॒ स्वाहा॑ निक॑षिताय॒ स्वाहा॑ यद॒त्ति॒ तस्मै॒ स्वाहा॑ यत्पिब॑ति॒ तस्मै॒ स्वाहा॑ यन्मेह॑ति॒ तस्मै॒ स्वाहा॑ यच्छ॒कृत्क॒रोति॒ तस्मै॒ स्वाहा॑ रेत॑से॒ स्वाहा॑ प्र॒जाभ्यः॒ स्वाहा॑ प्र॒जन॑नाय॒ स्वाहा॑ स॒र्वस्मै॒ स्वाहा॑ —२७) [ निष॑ण्णाय॒स्वाहा॑वीक्षिष्यते

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्वाहानिकर्षमाणायस्वाहासप्तविꣳशतिश्च ]॥ १९ ॥ अग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहर्तमस्यृतस्यर्तमसिसत्यमसिसत्यस्य सत्यमस्यृतस्य पंथाअसि देवानां छायामृतस्य नाम तत्सत्यं यत्त्वं प्रजापतिरस्यधियदस्मिन्वाजिनीव शुभस्पर्धंते दिवः सूर्येण विशोपोवृणानः पवते कव्यन्पशुंन गोपाइर्यः परिज्मा —४८ ) [ अग्नयेष्टाचत्वारिꣳशत् ] ॥ २० ॥ प्रजननं ( ३०९ ) प्रात.सवने ( ६३ ) ब्रह्मवादिनो ( १३४ ) गिरस ( १७१ ) आपः ( ३४७ ) सोमः ( ३८९ ) सहस्रतम्या ( २१२ ) त्रि ( ११८ ) जमदग्निः ( ४८ ) संवत्सरो ( २०० ) देवस्य ( ७५ ) विभू ( ७२ ) रायनाया ( २६ ) ग्नये ( २३ ) पृथिव्या ( ४७ ) अग्नये ( २३ ) पृथिव्यै ( ४४ ) भुवं ( ६९ ) ईङ्काराया ( १७७ ) ग्नये ( ४८ ) विꣳशतिः ( २६२५ ) ॥ २० ॥ इतितैत्तिरीय संहितायां सप्तमकाण्डेप्रथमःप्रपाठकः ॥ १ ॥

॥ हरिःओम् ॥ साध्यावै देवाः सुवर्गकामाएतꣳ षड्रात्रमपश्यन्तमाहरन्तेनायजंत ततोवैते सुवर्गं लोकमायन् यएवं विद्वाꣳसः षड्रात्रमासते सुवर्गमेव लोकं यंति देवसत्रं वै षड्रात्रः प्रत्यक्षꣳह्येतानि पृष्ठानि यएवं विद्वाꣳसः षड्रात्रमासते साक्षादेवदेवताअभ्यारोहंति षड्रात्रो भवति षड्वा ऋतवः षट्पृष्ठानि ( १ ) पृष्ठैरेवर्तूनन्वारोहंत्यृतुभिः संवत्सरं ते संवत्सरएव प्रतितिष्ठंति बृहद्रथंतराभ्यां यंतीयं वावरथंतरमसौ बृहदाभ्यामेव यंत्यथो अनयोरेव प्रतितिष्ठंत्येते वै यज्ञस्यांजसायनीस्रुतीताभ्यामेव सुवर्गं लोकं यंति त्रिवृदग्निष्टोमोभवति तेजएवावरुंधते पंचदशोभ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वर्तींद्रियमेवावरुंधते सप्तदशः (२) भवत्यन्नाद्यस्यावरुध्या अथो प्रैव तेन जायंतएकविंशो-भवति प्रतिष्ठित्या अथो रुचमेवात्मन्दधते त्रिणवोभवति विजित्यै त्रयस्त्रिंशोभवति प्रतिष्ठित्यै सदोहविर्धानिन एतेन षडात्रेण यजेरन्नाश्वत्थीहविर्धानं चाग्नीध्रं च भवतस्तद्धि सुवर्ग्यं चक्रीवंती भवतः सुवर्गस्य लोकस्य समष्ट्याउलूखलबुध्नोयूपोभवति प्रतिष्ठित्यै प्रांचोयांति प्राङि-वहि सुवर्गः (३) लोकः सरस्वत्यायांत्येषवै देवयानः पंथास्तमेवान्वारोहंत्याक्रोशंतोयांत्यवर्ति-मेवान्यस्मिन्प्रतिषज्य प्रतिष्ठां गच्छंति यदादशशतं कुर्वंत्यथैकमुत्थानंशतायुः पुरुषः शतेंद्रिय आयुष्येवेंद्रिये प्रतितिष्ठंति यदा शतंसहस्रं कुर्वंत्यथैकमुत्थानंसहस्रसंमितोवा असौ लो-कोमुमेव लोकमभिजयंतियदा (४) एषां प्रमीयेत यदा वा जीयेरन्नथैकमुत्थानं तद्धितीर्थम्— ११) (पृष्ठानिसप्तदशःसुवर्गोयदैकादशच) ॥ १ ॥ कुसुरुबिंदुऔद्दालकिरकामयत पशुमा-न्स्यामिति सएतंसप्तरात्रमाहरत्तेनायजत तेन वै सयावंतोग्राम्याः पशवस्तानवारुंध यएवं विद्वान्त्सप्तरात्रेण यजते यावंतएव ग्राम्याः पशवस्तानेवावरुंधे सप्तरात्रोभवति सप्तग्राम्याः प-शवः सप्तारण्याः सप्त छंदांस्युभयस्यावरुध्यै त्रिवृदग्निष्टोमोभवति तेजः (१) एवावरुंधे पं-चदशोभवतींद्रियमेवावरुंधे सप्तदशोभवत्यन्नाद्यस्यावरुध्या अथो प्रैव तेन जायतएकविंशोभवति प्रतिष्ठित्याअथो रुचमेवात्मन्धत्ते त्रिणवोभवति विजित्यै पंचविंशोग्निष्टोमोभवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुध्यै विश्वजित्सर्वपृष्ठोतिरात्रोभवति सर्वस्याभिजित्यै यत्प्रत्यक्षं पूर्वेष्वहः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सु पृष्ठान्युपेयुः प्रत्यक्षम् ( २ ) विश्वजिति यथा दुग्धामुपसीदत्येवमुत्तममहः स्यान्नैकरात्रश्च न स्याद्बृहद्रथंतरे पूर्वेष्वहःसूपयंतीयं वाव रथंतरमसौ बृहदाभ्यामेव नयंत्यथो अनयोरेव प्रतितिष्ठंति यत्प्रत्यक्षं विश्वजिति पृष्ठान्युपयंति यथा प्रत्तां दुहेतादृगेवतत्—१२ ) [ तेजःप्रत्यक्षंद्विचत्वारिꣳशच्च ] ॥ २ ॥ बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति सएतमष्टरात्रमपश्यत्तमाहरत्तेनायजत ततोवै सब्रह्मवर्चस्यभवद्यएवं विद्वानष्टरात्रेण यजते ब्रह्मवर्चस्येव भवत्यष्टरात्रोभवत्यष्टाक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमवरुंधेष्टरात्रोभवति चतस्रोवै दिशश्चतस्रोवांतरदिशादिग्भ्यएव ब्रह्मवर्चसमवरुंधे ( १ ) त्रिवृदग्निष्टोमोभवति तेज एवावरुंधे पंचदशोभवतींद्रियमेवावरुंधे सप्तदशोभवत्यन्नाद्यस्यावरुध्याअथो प्रैव तेन जायतएकविꣳशोभवति प्रतिष्ठित्याअथो रुचमेवात्मन्धत्ते त्रिणवोभवति विजित्यै त्रयस्त्रिꣳशोभवति प्रतिष्ठित्यै पंचविꣳशोग्निष्टोमोभवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुध्यै विश्वजित्सर्वपृष्ठोतिरात्रोभवति सर्वस्याभिजित्यै —२ ) [ रुंधेऽभिजित्यै ] ॥ ३ ॥ प्रजापतिः प्रजाअसृजत ताः सृष्टाः क्षुधन्यायन्त्सएतं नवरात्रमपश्यत्तमाहरत्तेनायजत ततोवै प्रजाभ्योकल्पत यर्हि प्रजाः क्षुधं निगच्छेयुस्तर्हि नवरात्रेण यजेतेमेह्रिवा एतासां लोकाअक्लृप्ता अथैताः क्षुधं निगच्छंतीमानेवाभ्योलोकान्कल्पयति तान्कल्पमानान्प्रजाभ्योनुकल्पते कल्पते ( १ ) अस्माइमे लोकाऊर्जं प्रजासु दधाति त्रिरात्रेणैवेमं लोकं कल्पयति त्रिरात्रेणांतरिक्षं त्रि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रात्रेणामुं लोकं यथां गुणेगुणमन्वस्यंत्येवमेव तल्लोके लोकमन्वंस्यति धृत्या अशिथिलं भावाय ज्योतिर्गौरायुरितिं ज्ञाताः स्तोमांभवंतीयं वाव ज्योतिरंतरिक्षं गौरसावायुरेष्वेव लोकेषु प्रतितिष्ठंति ज्ञात्रं प्रजानांम् ( २ ) गच्छति नवरात्रोभंवत्यभिपूर्वमेवास्मिन्तेजोंदधाति योज्योगांमयावी स्यात्स-नंवरात्रेणं यजेत प्राणाहि वाएतस्यार्धृंताअथैतस्य ज्योगांमयति प्राणानेवास्मिंन्दाधारोतयदी-तासुभंवंति जीवंत्येव— ३३ ) [ कल्पंतेप्रजानांत्रयंस्त्रिꣳशाच्च ] ॥ ४ ॥ प्रजापंतिरकामयत प्रजांयेयेति सएतं दशंहोतारमपश्यत्तमंजुहोत्तेनं दशरात्रमंसृजत तेनं दशरात्रेण प्राजांयत दशरा-त्राय दीक्षिष्यमाणोदशंहोतारं जुहुयाद्दशंहोत्रैव दंशरात्रꣳ सृंजते तेनं दशरात्रेण प्रजांयते वैरा-जोवा एषयज्ञोयद्दंशरात्रोयएवं विद्वान्दंशरात्रेण यजंते विराजंमेव गच्छति प्राजापत्योवा एषय-ज्ञोयद्दंशरात्रः ( १ ) यएवं विद्वान्दंशरात्रेण यजंते प्रैवजांयतइंद्रोवै सदृङ् देवतांभिरासीत्सन-व्यावृतंमगच्छत्सप्रजापंतिमुपांधावत्तस्मांएतं दंशरात्रं प्रायंच्छत्तमाहंरत्तेनांयजततोवै सोंन्याभिं-र्देवतांभिर्व्यावृतंमगच्छद्यएवं विद्वान्दंशरात्रेण यजंते व्यावृतंमेव पाप्मना भ्रातृंव्येण गच्छति त्रि ककुद्वै ( २ ) एषयज्ञोयद्दंशरात्रः ककुत्पंचदशःककुदेंकविꣳशः ककुत्त्रयस्त्रिꣳशोयएवं विद्वान्दंश-रात्रेण यजंते त्रिककुदेव संमानानां भवति यजंमानः पंचदशोयजंमानएकविꣳशोयजंमानस्त्रय-स्त्रिꣳशः पुरइतंराअभिचर्यमाणोदशरात्रेणं यजेत देवपुराएव पर्यूहते तस्य नकुतंश्चनो पांव्या-धोभंवति नैनंमाभिचरंन्स्तृणुते देवासुराः संयंत्ताआसन्ते देवाएंताः ( ३ ) देवपुराअंपश्यन्यद्द-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शरात्रस्ताःपर्यौहंत तेषां न कुतश्चनोपाव्याधोभवत्ततोदेवा अभवन्परासुरायोभ्रातृव्यवान्स्या-
त्सदशरात्रेण यजेत देवपुरीएव पर्यूहते तस्य न कुतश्चनोपाव्याधोभवति भवत्यात्मना
परास्य भ्रातृव्योभवति स्तोमस्तोमस्योपस्तिर्भवति भ्रातृव्यमेवोपस्तिं कुरुते जामिवै
( ४ ) एतत्कुर्वंति यज्यायाꣳसꣳ स्तोममुपेत्यकनीयाꣳसमुपयंति यदग्निष्टोमसामान्यव-
स्तांच परास्तांच भवंत्यजामित्वाय त्रिवृदग्निष्टोमोग्निष्टुदाग्नेयीषु भवति तेजएवावरुंधे पं-
चदशउक्थ्यऐंद्रीष्विंद्रियमेवावरुंधे त्रिवृदग्निष्टोमोवैश्वदेवीषु पुष्टिमेवावरुंधे सप्तदशोग्निष्टो-
मः प्राजापत्यासु तीव्रसोमोन्नाद्यस्यावरुध्याअथो प्रैव तेन जायते ( ५ ) एकविꣳशउ-
क्थ्यः सौरीषु प्रतिष्ठित्याअथो रुचमेवात्मन्धत्ते सप्तदशोग्निष्टोमः प्राजापत्यासूपहव्यउपहवमेव ग-
च्छति त्रिणवावग्निष्टोमावभितऐंद्रीषु विजित्यै त्रयस्त्रिꣳशउक्थ्योवैश्वदेवीषु प्रतिष्ठित्यै विश्वजि-
त्सर्वपृष्ठोतिरात्रोभवति सर्वस्याभिजित्यै — ३१ ) [ दशरात्रोवाएतावैजायतएकंत्रिꣳशच्च ]
॥ ५ ॥ ऋतवोवै प्रजाकामाः प्रजां नाविंदंत तेकामयंत प्रजाꣳ सृजेमहि प्रजामवरुंधीमहि प्रजां
विंदेमहि प्रजावंतः स्यामेति तएतमेकादशरात्रमपश्यन्तमाहरं तेनायजंत ततोवै ते प्रजामसृजंत
प्रजामवारुंधत प्रजामविंदंत प्रजावंतोभवन्त ऋतवोभवन्तदार्तवानामार्तवत्वमृतूनां वा एते पुत्रा-
स्तस्मात् ( १ ) आर्तवाउच्यंते यएवं विद्वाꣳसएकादशरात्रमासते प्रजामेव सृजंते प्रजामवरुंधते
प्रजां विंदते प्रजावंतोभवंति ज्योतिरतिरात्रोभवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ख्यात्यै पृष्ठ्यः षडहोभवति षड्वा ऋतवः षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहंत्यृतुभिः संवत्सरंते संवत्सरएव प्रतितिष्ठंति चतुर्विंशोभवति चतुर्विंशत्यक्षरा गायत्री ( २ ) गायत्रं ब्रह्मवर्चसं गायत्रियामेव ब्रह्मवर्चसे प्रतितिष्ठंति चतुश्चत्वारिंशोभवति चतुश्चत्वारिंशदक्षरा त्रिष्टुगिंद्रियं त्रिष्टुत्रिष्टुभ्येवेंद्रिये प्रतितिष्ठंत्यष्टाचत्वारिंशोभवत्यष्टाचत्वारिंशदक्षरा जगती जागताः पशवोजगत्यामेव पशुषुप्रतितिष्ठंत्येकादशरात्रोभवति पंच वा ऋतवआर्तवाः पंचर्तुष्वेवार्तवेषु संवत्सरे प्रतिष्ठाय प्रजामवरुंधतेतिरात्रावभितोभवतः प्रजायै परिगृहीत्यै — ४९ ) [ तस्माद्गायत्र्येकान्नपंचाशच्च ]

॥ ६ ॥ ऐंद्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति यज्ञस्य वैक्लृप्तिमनुप्रजाः कल्पंते यज्ञस्याक्लृप्तिमनु न कल्पंते यथापूर्वमेव प्रजाः कल्पयति न ज्यायांसं कनीयानतिक्रामत्यैंद्रवायवाग्रान्गृह्णीयादामयाविनः प्राणेन वा एषव्यृध्यते यस्यामयति प्राणऐंद्रवायवः प्राणेनैवैनं समर्धयति मैत्रावरुणाग्रान्गृह्णीरन् येषां दीक्षितानां प्रमीयेत ( १ ) प्राणापानाभ्यां वा एते व्यृध्यंते येषां दीक्षितानां प्रमीयते प्राणापानौ मित्रावरुणौ प्राणापानावेव मुखतः परिहरंतआश्विनाग्रान्गृह्णीतानुजावरोश्विनौ वै देवानामानुजावरौ पश्चेवाग्रं पर्यैतामश्विनावेतस्यदेवतायआनुजावरस्तावेवैनमग्रंपरिणयतः शुक्राग्रान्गृह्णीत गतश्रीः प्रतिष्ठाकामोसौ वा आदित्यः शुक्रएषोंतोंतं मनुष्यः ( २ ) श्रियै गत्वा निवर्ततेंतादेवांतमारभते न ततः पापीयान्भवति मंथ्यग्रान्गृह्णीताभिचरन्नार्तपात्रं वा एतद्यन्मंथिपात्रं मृत्युनैवैनं ग्राहयति ताजगार्तिमार्च्छंत्याग्रयणा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ग्रान्गृह्णीत यस्य पिता पितामहः पुण्यः स्यादथ तन्न प्राप्नुयाद्वाग्वा वा एषइंद्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यः ( ३ ) भवत्यथ । तन्न प्राप्नोत्युरइंवैतद्यज्ञस्य वागिव यदाग्रयणोवाचैवैनमिंद्रियेण समर्धयति न ततः पापीयान्भवत्युक्थ्यांग्रान्गृह्णीताभिचर्यमाणःसर्वेषां वा एतत्पात्राणामिंद्रियं यदुक्थ्यपात्रꣳ सर्वेणैवैनमिंद्रियेणाति प्रयुंक्तेसरस्वत्यभिनोनेषिवस्यइति पुरोरुचं कुर्याद्वाग्वै ( ४ ) सरस्वती वाचैवैनमति प्रयुंक्ते मात्वत्क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छति पूर्णान्ग्रहान्गृह्णीयादामयाविनः प्राणान्वा एतस्यशुगृच्छति यस्यामयति प्राणाग्रहाः प्राणानेवास्यशुचोमुंचत्युतयदीतासुर्भवति जीवत्येव पूर्णान्ग्रहान् ( ५ ) गृह्णीयाद्यर्हि पर्जन्योन वर्षेत्प्राणान्वा एतर्हि प्रजानाꣳ शुगृच्छति यर्हि पर्जन्योन वर्षति प्राणाग्रहाः प्राणानेव प्रजानाꣳशुचोमुंचति ताजक्प्रवर्षति— २५ ) [ प्रमीयेतमनुष्यःपुण्योवैग्रहान्पचविꣳशतिश्च ] ॥ ७ ॥ गायत्रोवा ऐंद्रवायवोगायत्रं प्रायणीयमहस्तस्मात्प्रायणीयेहन्नैंद्रवायवोगृह्यते स्वएवैनमायतने गृह्णाति त्रैष्टुभोवै शुक्रस्त्रैष्टुभं द्वितीयमहस्तस्माद्द्वितीयेहञ्छुक्रोगृह्यते स्वएवैनमायतने गृह्णाति जागतोवा आग्रयणोजागतं तृतीयमहस्तस्मात्तृतीयेहन्नाग्रयणोगृह्यते स्वएवैनमायतने गृह्णात्येतद्वै ( १ ) यज्ञमाप्यच्छंदाꣳस्याप्नोति यदाग्रयणश्वोगृह्यते यत्रैव यज्ञमदृशंततएवैनं पुनः प्रयुंक्ते जगन्मुखोवै द्वितीयस्त्रिरात्रोजागतआग्रयणोयच्चतुर्थेहन्नाग्रयणोगृह्यतेस्वएवैनमायतने गृह्णात्यथो । स्वमेव छंदोनुपर्यावर्तंते राथंतरोवा ऐंद्रवा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यवोराथंतरं पंचममहस्तस्मात्पंचमेहन् ( २ ) ऐंद्रवायवोगृह्यते स्वएवैनमायतने गृह्णाति बार्हतोवै शुक्रोबार्हत१ँ षष्ठमहस्तस्मात्षष्ठेहन्छुक्रोगृह्यते स्वएवैनमायतने गृह्णात्येतद्वै द्वितीयं यज्ञमापद्यच्छंदा१ँस्याप्नोति यच्छुक्रः श्वोगृह्यते यत्रैव यज्ञमदृशन्ततएवैनं पुनः प्रयुंक्ते त्रिष्टुङ्मुखोवै तृतीयस्त्रिरात्रस्त्रैष्टुभः .( ३ ) शुक्रोयत्सप्तमेहन्छुक्रोगृह्यते स्वएवैनमायतने गृह्णात्यथो स्वमेव छंदोनुपर्यावर्तंते वाग्वा आग्रयणोवागष्टममहस्तस्मादष्टमेहन्नाग्रयणोगृह्यते स्वएवैनमायतने गृह्णाति प्राणोवा ऐंद्रवायवः प्राणोनवममहस्तस्मान्नवमेहन्नैंद्रवायवोगृह्यते स्वएवैनमायतने गृह्णात्येतत् ( ४ ) वै तृतीयं यज्ञमापद्यच्छंदा१ँस्याप्नोति यदैंद्रवायवः श्वोगृह्यते यत्रैव यज्ञमदृशन्ततएवैनं पुनः प्रयुङ्क्थो स्वमेव छंदोनुपर्यावर्तंते पथोवा एतेध्यपथे नयंति येन्येनैंद्रवायवात्प्रतिपद्यंतेंतः खलु वाएष यज्ञस्य यद्दशममहर्दशमेहन्नैंद्रवायवोगृह्यते यज्ञस्य ( ५ ) एवांतं गत्वा पंथात्पंथामपियंत्यथो यथावहीयसाप्रतिसारं वहंति तादृगेव तच्छंदा१ँस्यन्योन्यस्य लोकमभ्यध्यायन्तान्येतेनैव देवाव्यवाहयन्नैंद्रवायवस्य वाएतदायतनं यच्चतुर्थमहस्तस्मिन्नाग्रयणोगृह्यते तस्मादाग्रयणस्यायतनेनवमेहन्नैंद्रवायवोगृह्यते शुक्रस्य वा एतदायतनं यत्पंचमम् ( ६ ) अहस्तस्मिन्नैंद्रवायवोगृह्यते तस्मादैंद्रवायवस्यायतने सप्तमेहन्छुक्रोगृह्यतआग्रयणस्य वा एतदायतनं यत्षष्ठमहस्तस्मिन्छुक्रोगृह्यते तस्माच्छुक्रस्यायतनेष्टमेहन्नाग्रयणोगृह्यते छंदा१ँस्येव तद्विवाहयति प्रवस्यसोविवाहमाप्नोति यएवं वेदाथो देवताभ्यएव यज्ञे संविदं दधाति तस्मादिदमन्योन्यस्मै ( ७ ) ददाति — १ )

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



[ वाअह॒स्त्रैष्टुभएतद्यज्ञस्यपंच॒मम॒न्यस्माए॑कंच ] ॥ ८ ॥ प्र॒जाप॑तिरकामयत॒ प्रजाये॑येति॒ स ए॒तं द्वा॑दशरा॒त्रम॑पश्य॒त्तमाह॑र॒त्तेना॑यजत॒ ततो॒ वै सप्राजा॑यत॒यः का॒मये॑त॒ प्रजाये॒येति॒ सद्वा॑दशरा॒त्रेण यजेत॒ प्रैवजा॑यते ब्रह्मवा॒दिनो॑वदंत्यग्निष्टो॒मप्रा॑यणायज्ञाअथ॒ कस्मा॑दतिरा॒त्रः पूर्वः॑प्रयु॒ज्यत॒इति॒ चक्षु॑षी॒ वा ए॒ते य॒ज्ञस्य॒ यद॑तिरा॒त्रौ क॒नीनि॑के अग्निष्टो॒मौ यत् ( १ ) अ॒ग्नि॒ष्टो॒मं पूर्वं॑ प्रयुं॒जी॒रन्ब॑हि॒र्धा क॒नीनि॑के दध्यु॒स्तस्मा॑दतिरा॒त्रः पूर्वः॑ प्रयु॑ज्यते॒ चक्षु॑षी ए॒व य॒ज्ञेधि॒त्वाम॑ध्य॒तः क॒नीनि॑के प्रति॑दधति॒ यो॒वै गाय॒त्रीं ज्योति॑ःपक्षां॒ वेद॒ ज्योति॑षाभा॒सासु॒व॒र्गं लो॒कमे॑ति॒ याव॑ग्निष्टो॒मौ तौ प॒क्षौ ये॑ऽन्तरे॒ऽष्टावु॒क्थ्याः॑ सआ॒त्मैषा वै गाय॒त्री ज्योति॑ःपक्षा॒य ए॒वं वेद॒ज्योति॑षा भा॒सा सु॒व॒र्गं लो॒कम् ( २ ) ए॒ति॒ प्र॒जाप॑ति॒र्वा ए॒षद्वा॑दश॒धा विहि॑तो॒यद्द्वा॑दशरा॒त्रोयाव॑तिरा॒त्रौ तौ प॒क्षौ ये॑ऽन्तरे॒ऽष्टावु॒क्थ्याः॑ सआ॒त्मा प्र॒जाप॑ति॒र्वा वैष सन्त्सद्ध॒वैस॒त्रेण॑ स्पृणोति प्रा॒णावैसत्प्रा॒णाने॒व स्पृ॑णोति॒ सर्वा॑सां॒ वाए॒ते प्र॒जानां॑ प्रा॒णैरा॑सते॒ ये स॒त्रमास॑ते॒ तस्मा॑त्पृच्छंति॒ किमे॑ते स॒त्रिणइति॑ प्रि॒यः प्र॒जाना॑म् ( ३ ) उत्थि॑तो भवति॒ यए॒वं वेद —५ ) [ यल्लो॒कंप्र॒जानां॒पंचंच ] ॥ ९ ॥ नवाए॒षोन्यतो॒वैश्वान॒रः सु॒व॒र्ग्यं लो॒काय॒ प्राभ॑वदू॒र्ध्वोह॒वाए॒षआत॑तआसी॒त्ते दे॒वाए॒तं वैश्वा॒नरं॑ पर्यौ॑ह॒न्त्सुव॒र्गस्य॑ लो॒कस्य॒ प्रभू॑त्याऋ॒तवो॒वा ए॒तेन॒ प्र॒जाप॑तिमयाजय॒न्तेष्वा॑र्ध्नो॒दधि॒तदृ॑ध्नोति॒ ह॒वाऋ॒त्विक्षु॒यए॒वं वि॒द्वान्द्वा॑दशा॒हेन॒ यज॑ते॒ तेस्मि॑न्नैच्छं॒त॒ सरस॒मह॒वसं॒ताय॒ प्राय॑च्छत् ( १ ) यवं॑ ग्री॒ष्माय॒ौष॑धीर्व॒र्षाभ्यो॒व्रीही॒न्छ॒रदे॑मा॒षति॒लौ हे॑मंतशिशि॒राभ्यां॒ तेनेंद्रं॑ प्र॒जाप॑तिरयाजय॒त्ततो॒वाइंद्र॒इंद्रो॑ऽभव॒त्तस्मा॑दाहु॒रानु॑जाव॒रस्य॑ य॒ज्ञइ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ति सत्त्रेतेनाग्नेयंजत्तैषह्वैवकुणपमत्ति यः सत्त्रे प्रतिगृह्णाति पुरुषकुणपमश्वकुणपं गौर्वाअन्नं येन पात्रेणान्नं बिभ्रति यत्तं न निर्णेनिजति ततोधि (२) मलं जायत एकएव यजेतैकोहि प्रजापतिराध्नोद्द्वादशरात्रीर्दीक्षितः स्याद्द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्वा वै षएषहृत्वैजायते यस्तपसोधिजायते चतुर्धा वाएतास्तिस्रस्तिस्रोरात्रयोयद्द्वादशोपसदोयाः प्रथमायज्ञं ताभिः संभरति या द्वितीया यज्ञं ताभिरारंभते (३) यास्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमंतरतः शुंधते योवाअस्य पशुमत्ति माꣳसꣳ सोत्ति यः पुरोडाशं मस्तिष्कꣳ सयः परिवापं पुरीषꣳ सयआज्यं मज्जानꣳ सयः सोमꣳ स्वेदꣳ सोपि हवाअस्य शीर्षण्यानिष्पदः प्रतिगृह्णाति योद्वादशाहेप्रतिगृह्णाति तस्माद्द्वादशाहेन (४) न याज्यं पाप्मनोव्यावृत्त्यै— ४) [ अयंच्छदधिरभतेद्वादशाहेनंचत्वारिंच ] ॥ १० ॥

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पंचभ्यः स्वाहा षड्भ्यः स्वाहा सप्तभ्यः स्वाहाष्टाभ्यः स्वाहा नवभ्यः स्वाहा दशभ्यः स्वाहैकादशभ्यः स्वाहा द्वादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा चतुर्दशभ्यः स्वाहा पंचदशभ्यः स्वाहा षोडशभ्यः स्वाहा सप्तदशभ्यः स्वाहाष्टादशभ्यः स्वाहैकान्नविꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्नचत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न (१) षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्नशताय स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा सर्वस्मैस्वाहा— २१)

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



[ नैकंविंशतिश्च ] ॥ ११ ॥ एकस्मै स्वाहा त्रिभ्यः स्वाहा पंचभ्यः स्वाहा सप्तभ्यः स्वाहा नवभ्यः स्वाहैकादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा पंचदशभ्यः स्वाहा सप्तदशभ्यः स्वाहैकान्नविंशत्यै स्वाहा नवविंशत्यै स्वाहैकान्नचत्वारिंशते स्वाहा नवचत्वारिंशते स्वाहैकान्नषष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्नशताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा— १) [ एकस्मैपंचाशत् ] ॥ १२ ॥ द्वाभ्यां स्वाहा चतुर्भ्यः स्वाहा षड्भ्यः स्वाहाष्टाभ्यः स्वाहा दशभ्यः स्वाहा द्वादशभ्यः स्वाहा चतुर्दशभ्यः स्वाहा षोडशभ्यः स्वाहाष्टादशभ्यः स्वाहा विंशत्यै स्वाहाष्टानवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा— २६ ) [ द्वाभ्यां षड्विंशतिः ] ॥ १३ ॥ त्रिभ्यः स्वाहा पंचभ्यः स्वाहा सप्तभ्यः स्वाहा नवभ्यः स्वाहैकादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा पंचदशभ्यः स्वाहा सप्तदशभ्यः स्वाहैकान्नविंशत्यै स्वाहा नवविंशत्यै स्वाहैकान्नचत्वारिंशते स्वाहा नवचत्वारिंशते स्वाहैकान्नषष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहानवाशीत्यै स्वाहैकान्नशताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा— ४८ ) [ त्रिभ्योऽष्टाचत्वारिंशत् ] ॥ १४ ॥ चतुर्भ्यः स्वाहाष्टाभ्यः स्वाहा द्वादशभ्यः स्वाहा षोडशभ्यः स्वाहा विंशत्यै स्वाहा षण्णवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा— १६ [ चतुर्भ्यः षोडश ] ॥ १५ ॥ पंचभ्यः स्वाहा दशभ्यः स्वाहा पंचदशभ्यः स्वाहा विंशत्यै स्वाहा पंचनवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा— १४ ) [ पंचभ्यश्चतुर्दश ] ॥ १६ ॥ दशभ्यः स्वाहा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विꣳशत्यैस्वाहा त्रिꣳशते स्वाहा चत्वारिꣳशते स्वाहा पंचाशते स्वाहा षष्ट्यै स्वाहा सप्तत्यै स्वाहा शीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा—२२ ) ( दशभ्योद्वाविꣳशतिः ) ॥ १७ ॥ विꣳशत्यै स्वाहा चत्वारिꣳशते स्वाहा षष्ट्यै स्वाहाशीत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा—१२ ) ( विꣳशत्यैद्वादश ) ॥ १८ ॥ पंचाशते स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा त्रिभ्यः शतेभ्यः स्वाहा चतुर्भ्यः शतेभ्यः स्वाहा पंचभ्यः शतेभ्यः स्वाहा षड्भ्यः शतेभ्यः स्वाहा सप्तभ्यः शतेभ्यः स्वाहाष्टाभ्यः शतेभ्यः स्वाहा नवभ्यः शतेभ्यः स्वाहा सहस्राय स्वाहा सर्वस्मै स्वाहा—३२ ) [ पंचाशतेद्वात्रिꣳशत् ] ॥ १९ ॥ शताय स्वाहा सहस्राय स्वाहा-युताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहार्बुदाय स्वाहा न्यर्बुदाय स्वाहा समुद्राय स्वाहा मध्याय स्वाहान्ताय स्वाहा परार्धाय स्वाहोषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहोदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा—३८ ) ( शतायाष्टात्रिꣳशत् ) ॥ २० ॥

साध्याः ( २११ ) कुसुरुबिन्दो ( १४२ ) बृहस्पतिः ( १०० ) प्रजापतिः ( १३३ ) प्रजापति ( २८१ ) ऋतवं ( १४९ ) ऐन्द्रवायववाग्रान् ( २७५ ) गायत्रः ( ३५१ ) प्रजापति ( १५५ ) नैं ( २०४ ) कस्मा ( ७१ ) एकस्मै ( ५० ) द्वाभ्यां ( २६ ) त्रिभ्य ( ४८ ) श्चतुर्भ्यः ( १६ ) पञ्चभ्यों ( १४ ) दशभ्यो ( २२ ) विꣳशत्यै ( १२ ) पञ्चाशते ( ३२ ) शताय ( ३८ ) विꣳशतिः ( २२३० ) ॥ २० ॥ इतितैत्तिरीयसंहितायांसप्तमकाण्डेद्वितीयःप्रपाठकः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



॥ हरिः ओम् ॥ प्रजवं वा एतेन यंति यद्दशममहः पापावहीयं वा एतेन भवंति यद्दशम-महर्यौवै प्रजवं यतामपथेन प्रतिपद्यते यः स्थाणु१हंति यो भ्रेषन्येति सहीयते सयोवै दशमेहन्न-विवाक्यउपहन्यते सहीयते तस्मै यउपहताय व्याहृतमेवान्वारभ्य समश्नुतेथ योव्याहृसः ( १ ) हीयते तस्माद्दशमेहन्नविवाक्यउपहतायनव्युच्यमथो खल्वाहुर्यज्ञस्य वै समृद्धेन देवाः सुवर्गं लो-कमायन्व्यृज्ञस्य व्यृद्धेनासुरान्पराभावयन्निति यत्खलु वै यज्ञस्य समृद्धं तद्यजमानस्य यद्व्यृद्धं त-द्भ्रातृव्यस्य सयोवै दशमेहन्नविवाक्यउपहन्यते सएवातिरेचयति ते ये बाह्यादृशीकवः ( २ ) स्यु स्तेविब्रूयुर्यदि तत्र न विंदेयुरंतः सदसाद्व्युच्यंयदि तत्र न विंदेयुर्गृहपतिना व्युच्यंतव्युच्यमिवाथवा एतत्सर्पराज्ञिया ऋग्भिः स्तुवंतीयं वै सर्पतोराज्ञीयद्वा अस्यांकिंचार्चेति यदानृचुस्तेनेय१ सर्परा-ज्ञी तेयदेव किंच वाचानृचुर्यदितोध्यर्चितारः ( ३ ) तदुभयमाप्त्वावरुध्योत्तिष्ठामेति ताभिर्मनसा स्तुवते नवाइमामश्वरथोनाश्वतरीरथः सद्यः पर्याप्तुमर्हति मनोवाइमा१ सद्यः पर्याप्तुमर्हति मनः परिभवितुमथ ब्रह्मवदंति परिमितावाऋचः परिमितानि सामानि परिमितानि यजू१ष्यथैतस्यैवां-तोनास्ति यद्ब्रह्म तत्प्रतिगृणतआचक्षीत सः ( ४ ) प्रतिगरः —१ ) [ सद्दशीकवोऽर्चितारः सए-कंच ] ॥ १ ॥ ब्रह्मवादिनोवदंति किं द्वादशाहस्य प्रथमेनाह्नर्त्विजां यजमानोवृङ्क्त इति तेजइंद्रि-यमिति किंद्वितीयेनेति प्राणानन्नाद्यमिति किंतृतीयेनेति त्रीनिमान्लोकानिति किंचतुर्थेनेति चतु-ष्पदः पशूनिति किंपंचमेनेति पंचाक्षरांपङ्क्तिमितिकि१ षष्ठेनेति षडृतूनिति किं१ सप्तमेनेति सप्तप-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दाꣳशक्करीमिति (१) किमष्टमेनेत्यष्टाक्षरां गायत्रीमिति किन्नवमेनेति त्रिवृतꣳस्तोममिति-
किं दशमेनेति दशाक्षरां विराजमिति किमेकादशेनेत्येकादशाक्षरां त्रिष्टुभमिति किंद्वादशेनेति द्वाद
शाक्षरां जगतीमित्येतावद्वाअस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते —४१ ) [ शक्करीमित्येक-
चत्वारिꣳशच्च ] ॥ २ ॥ एषवाआप्तोद्वादशाहोयत्त्रयोदशरात्रः समानꣳ ह्येतदहर्यत्प्रायणीयश्चो-
दयनीयश्च त्र्यतिरात्रोभवति त्रयइमे लोकाएषां लोकानामाप्त्यै प्राणोवै प्रथमोतिरात्रोऽपानोद्विती
योपानस्तृतीयः प्राणापानोदानेष्वेवान्नाद्ये प्रतितिष्ठंति सर्वमायुर्यंति यएवं विद्वाꣳसस्त्रयोदशरात्र-
मासतेतदाहुर्वाग्वाएषावितता (१) यद्द्वादशाहस्तां विच्छिंद्युर्यन्मध्येतिरात्रं कुर्युरुपदासुकागृहप
तेर्वाक्स्यादुपरिष्टाच्छंदोमानां महाव्रतं कुर्वंति संततामेव वाचमवरुंधतेनुपदासुकागृहपतेर्वाग्भवति-
पशवोवै छंदोमाअन्नं महाव्रतं यदुपरिष्टाच्छंदोमानां महाव्रतं कुर्वंति पशुषु चैवान्नाद्ये च प्र-
तितिष्ठंति —४३ ) [ विततात्रिचत्वारिꣳशच्च ] ॥ ३ ॥ आदित्याअकामयंतोभयोर्लोकयोर्ऋ-
ध्नुयामेति तएतं चतुर्दशरात्रमपश्यन्तमाहरंतेनायजंत ततोवै तउभयोर्लोकयोरार्ध्नुवन्नस्मिꣳश्चा-
मुष्मिꣳश्च यएवं विद्वाꣳसश्चतुर्दशरात्रमासतउभयोरेव लोकयोर्ऋध्नुवंत्यस्मिꣳश्चामुष्मिꣳश्च चतुर्द
शरात्रोभवति सप्तग्राम्याओषधयः सप्तारण्याउभयीषामवरुद्ध्यै यत्पराचीनानिपृष्ठानि ( १ )
भवंत्यमुमेवतैर्लोकमभिजयंति यत्प्रतीचीनानि पृष्ठानि भवंतीममेव तैर्लोकमभिजयंति त्रयस्त्रिꣳ
शौ मध्यतः स्तोमौ भवतः साम्राज्यमेव गच्छंत्यधिराजौ भवंतोधिराजाएव समानानां भवंत्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तिरात्रावभितोंभवतः परिंगृहीत्यै— ३४ ) [ पृष्ठानिचतुंस्त्रिꣳशच्च ] ॥ ४ ॥ प्रजापतिः सुवर्गं लोकमैत्तं देवाअन्वांयन्तानांदित्याश्चं पशवश्चान्वांयन्ते देवाअंब्रुवन्यान्पशूनुपाजींविष्मतइमें न्वाग्मन्निति तेभ्यंएतं चंतुर्दशरात्रं प्रत्यौहन्तआंदित्याः पृष्ठैः सुवर्गं लोकमारोंहन्त्र्यहाभ्यांमस्मिन्लोके पशून्प्रत्यौंहन्पृष्ठैरादित्याअमुष्मिंन्लोकआर्ध्नुवन्त्र्यहाभ्यांमस्मिन् (१) लोके पशवोयएवं विद्वाꣳसश्चतुर्दशरात्रमासंतउभयोरेव लोकयोर्ऋध्नुवंत्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठैरेवामुष्मिंन्लोकऋध्नुवंति त्र्यहाभ्यांमस्मिन्लोके ज्योतिर्गौरायुरितिं त्र्यहोभंवतीयं वावज्योतिंरंतरिंक्षं गौरसावायुंरिमानेव लोकानभ्यारोंहंति यदन्यतः पृष्ठानिस्युर्विविवधꣳ स्यान्मध्यें पृष्ठानिं भवंति सविवधत्वायं (२) ओजोवै वीर्यं पृष्ठांन्योजंएव वीर्यं मध्यतोदंधतेबृहद्रथंतराभ्यां यंतीयं वाव रंथंतरमसौ बृहदाभ्यामेव यंत्यथो अनयोरेवप्रतितिष्ठंत्येते वै यज्ञस्यांजसायंनीस्रुतीताभ्यामिव सुवर्गं लोकं यंति परांचोवा एते सुवर्गं लोकमभ्यारोंहंति ये पराचीनानि पृष्ठान्युंपयंतिं प्रत्यङ्त्र्यहोभंवति प्रत्यवरूढ्याअथो प्रतिंष्ठित्यै (३) उभयौर्लोकयोर्ऋध्वोत्तिष्ठंति चतुंर्दशैतास्तासां यादश दशांक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवंरुंधते याश्चतंस्रश्चतंस्रोदिशोदिक्ष्वैव प्रतिंतिष्ठंत्यतिरात्रावभितोंभवतः परिंगृहीत्यै—३१) [ अस्मिन्त्संविवधत्वायप्रतिंष्ठित्याएकंत्रिꣳशच्च ] ॥ ५ ॥ इंद्रोवै. सदृङ्देवताभिरासीत्सनव्यावृतंमगच्छत्सप्रजापतिमुपाधावत्तस्माएतंपंचदशरात्रं प्रायंच्छत्तमाहंरत्तेनांयजत ततोवै सोन्याभिर्देवताभिर्व्यावृतमगच्छद्यएवं विद्वाꣳसः पंचदशरात्रमासंते व्यावृतमेव पाप्मना भ्रातृंव्ये-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ण गच्छंति ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरंतरिक्षम् ( १ ) गौरसावायुरेष्वेव लोकेषु प्रतितिष्ठंत्यसत्रं वाएतद्यदछंदोमं यच्छंदोमाभवंति तेनसत्रं देवताएव पृष्ठैरवरुंधते पशून्छंदोमैरोजोवै वीर्यं पृष्ठानि पशवश्छंदोमा ओजस्येव वीर्ये पशुषु प्रतितिष्ठंति पंचदशरात्रो भवति पंचदशोवज्रोवज्रमेव भ्रातृव्येभ्यः प्रहरंत्यतिरात्रावभितोभवतइंद्रियस्य ( १ ) परिगृहीत्यै — १ ) ( अंतरिक्षमिंद्रियस्यैकंच ) ॥६॥ इंद्रोवै शिथिलइवाप्रतिष्ठित आसीत्सोसुरेभ्योविभेत्सप्रजापतिमुपाधावत्तस्माएतं पंचदशरात्रं वज्रं प्रायच्छत्तेनासुरान्पराभाव्य विजित्य श्रियमगच्छदग्निष्टुतापाप्मानं निरदहत पंचदशरात्रेणौजोबलमिंद्रियं वीर्यमात्मन्नधत्त यएवं विद्वांस्सः पंचदशरात्रमासते भ्रातृव्यानेव पराभाव्य विजित्य श्रियं गच्छंत्यग्निष्टुता पाप्मानंनिः ( १ ) दहंते पंचदशरात्रेणौजोबलमिंद्रियं वीर्यमात्मन्दधतएताएव पशव्याः पंचदशवा अर्धमासस्य रात्रयोर्धमासशः संवत्सरआप्यते संवत्सरं पशवोनुप्रजायंते तस्मात्पशव्याएताएव सुवर्ग्याः पंचदशवा अर्धमासस्य रात्रयोर्धमासशः संवत्सरआप्यते संवत्सरः सुवर्गोलोकस्तस्मात्सुवर्ग्याज्योतिर्गौरायुरिति त्र्यहो भवतीयं वावज्योतिरंतरिक्षम् ( २ ) गौरसावायुरिमानेव लोकानभ्यारोहंति यदन्यतः पृष्ठानि स्युर्विविवधस्स्यान्मध्ये पृष्ठानि भवंति सविवधत्वायौजोवै वीर्यं पृष्ठान्योजएव वीर्यं मध्यतोदधते बृहद्रथंतराभ्यां यंतीयं वाव रथंतरमसौ बृहदाभ्यामेव यंत्यथो अनयोरेव प्रतितिष्ठंत्येते वै यज्ञस्यांजसायनी स्रुती ताभ्यामेवसुवर्गं लोकम् ( २ ) यंतिपरांचोवाएते सुवर्गं लोकमभ्यारोहंति येपराचीनानि पृष्ठान्युपयंति प्रत्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्र्यहोभवति प्रत्यवरूढ्याअथो प्रतिष्ठित्याउभयोर्लोकयोर्ऋध्वोत्तिष्ठंति पंचदशैतास्तासां या-
दश दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुंधते याः पंच पंचदिशोदिक्ष्वेव प्रतितिष्ठंत्यति-
रात्रावभितोभवतइंद्रियस्य वीर्यस्य प्रजायै (४) पशूनां परिगृहीत्यै—२) [ निरंतरिक्षंलोकं-
प्रजायैद्वेच ] ॥ ७ ॥ प्रजापतिरकामयतान्नादः स्यामिति सएत८ सप्तदशरात्रमपश्यत्तमाहरत्ते-
नायजत, ततोवै सोन्नादोभवद्यएवं विद्वा८ंसः सप्तदशरात्रमासतेन्नादाएव भवंति पंचाहोभवति
पंच वा ऋतवः संवत्सरऋतुष्वेव संवत्सरेप्रतितिष्ठंत्यथो पंचाक्षरा पङ्क्तिः पाङ्क्तोयज्ञोयज्ञमेवावरुंधते
सत्रंवाएतंत् (१) यदछंदोमं यच्छंदोमाभवंति तेन सत्रं देवताएव पृष्ठैरवरुंधते पशूञ्छंदोमैरो-
जोवै वीर्यं पृष्ठानि पशवश्छंदोमाओजस्येव वीर्येपशुषु प्रतितिष्ठंति सप्तदशरात्रोभवति सप्तदशः
प्रजापतिः प्रजापतेराप्त्याअतिरात्रावभितोभवतोन्नाद्यस्य परिगृहीत्यै— ३७) [ एतत्सप्तत्रि८-
शच्च ] ॥ ८ ॥ साविराड्विक्रम्यातिष्ठद्ब्रह्मणादेवेष्वन्नेनासुरेषु ते देवाअकामयंतोभय८ संवृंजीमहि
ब्रह्मचान्नं चेति तएताविं८शति८ रात्रीरपश्यन्ततोवै तउभय८ समवृंजत ब्रह्मचान्नं च ब्रह्मव-
र्चसिनोन्नादाअभवन्यएवं विद्वा८ंसएताआसतउभयमेव संवृंजते ब्रह्म चान्नं च (१) ब्रह्मवर्च-
सिनोन्नादाभवंति द्वेवाएते विराजौ तयोरेव नाना प्रतितिष्ठंति वि८ंशोवै पुरुषोदशहस्त्याअंगुल-
योदशपद्या यावानेव पुरुषस्तमाप्त्वोत्तिष्ठंति, ज्योतिर्गौरायुरिति त्र्यहाभवंतीयंवावज्योतिरंतरिक्षंगौ-
रसावायुरिमानेवलोकानभ्यारोहंत्यभिपूर्वं त्र्यहाभवंत्यभिपूर्वमेव सुवर्गं (२) लोकमभ्यारोहंति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवंति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज-
एव वीर्यं मध्यतो दधते बृहद्रथंतराभ्यां यंतीयं वाव रथंतरमसौ बृहदाभ्यामेव यंत्यथो अनयोरेव
प्रतितिष्ठंत्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यंति परांचो वा एते सुवर्गं लोकम्
(२) अभ्यारोहंति ये पराचीनानि पृष्ठान्युपयंति प्रत्यङ् त्र्यहो भवति प्रत्यवरूढ्या अथो
प्रतिष्ठित्या उभयोर्लोकयोर्ऋध्वोत्तिष्ठंत्यतिरात्रावभितो भवतो ब्रह्मवर्चसस्यान्नाद्यस्य परिगृहीत्यै
—२३) [ चसुवर्गंलोकंत्रयोविꣳशतिश्च ] ॥ ९ ॥ असावादित्योस्मिन्लोक आसीत्तं
देवाः पृष्ठैः परिगृह्य सुवर्गं लोकमगमयन्परैरवस्तात्पर्यगृह्णन्दिवाकीर्त्येन सुवर्गे लोके प्रत्य
स्थापयन्परैः परस्तात्पर्यगृह्णन्पृष्ठैरुपावारोहन्त्स वा असावादित्योमुष्मिन्लोके परैरुभयतः परिगृहीतो
यत्पृष्ठानि भवंति सुवर्गमेव तैर्लोकं यजमाना यंति परैरवस्तात्परिगृह्णंति दिवाकीर्त्येन (१)
सुवर्गे लोके प्रतितिष्ठंति परैः परस्तात्परिगृह्णंति पृष्ठैरुपावरोहंति यत्परैः परस्तान्न स्युः
परांचः सुवर्गाल्लोकान्निष्पद्येरन्यदवस्तान्न स्युः प्रजा निर्दहेयुरभितो दिवाकीर्त्यं परः सामानो भवं
ति सुवर्ग एवैनान्लोक उभयतः परिगृह्णंति यजमाना वै दिवाकीर्त्यꣳ संवत्सरः परः सामानोभि
तो दिवाकीर्त्यं परः सामानो भवंति संवत्सर एवोभयतः (२) प्रतितिष्ठंति पृष्ठं वै दिवाकीर्त्यं पार्श्वे-
परः सामानोभितो दिवाकीर्त्यं परः सामानो भवंति तस्मादभितः पृष्ठं पार्श्वे भूयिष्ठा ग्रहा गृह्यंते भूयि
ष्ठꣳ शस्यते यज्ञस्यैव तन्मध्यतो ग्रंथिं ग्रथ्नंत्यविस्रꣳसाय सप्त गृह्यंते सप्त वै शीर्षण्याः प्राणाः प्रा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



णानेव यजमानेषु दधति यत्पराचीनानि पृष्ठानि भवंत्यमुमेव तैर्लोकमभ्यारोहंति यदिमं लोकं न (३) प्रत्यवरोहेयुरुद्वामाद्येयुर्यजमानाः प्रवामीयेरन्यत्प्रतीचीनानि पृष्ठानि भवंतीममेव तैर्लोकं प्रत्यवरोहंत्यथो अस्मिन्नेव लोके प्रतितिष्ठंत्यनुन्मादायेंद्रोवा अप्रतिष्ठितआसीत्सप्रजापतिमुपाधावत्तस्मा एतमेकविंशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत ततोवै सप्रत्यतिष्ठद्ये बहुयाजिनोप्रतिष्ठिताः (४) स्युस्तएकविंशतिरात्रमासीरन्द्वादश मासाः पंचर्तवस्त्रयइमे लोकाअसावादित्यएकविंशएतावंतोवै देवलोकास्तेष्वेवयथापूर्वं प्रतितिष्ठंत्यसावादित्योनव्यरोचत सप्रजापतिमुपाधावत्तस्मा एतमेकविंशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत ततोवै सोरोचत यएवं विद्वांसएकविंशतिरात्रमासते (५) रोचंतएवैकविंशतिरात्रोभवति रुग्वाएकविंशोरुचमेव गच्छंत्यथो प्रतिष्ठामेव प्रतिष्ठाह्येकविंशोतिरात्रावभितोभवतोब्रह्मवर्चसस्य परिगृहीत्यै —२१) [ दीवाकीर्त्यैनैवोभयंतोनाप्रतिष्ठिताआसंतएकविंशतिश्च ] ।॥१०॥ अर्वाङ्यज्ञः संक्रामत्वमुष्मादधिमामभि । ऋषीणां यः पुरोहितः । निर्देवं निर्वीरं कृत्वा विष्कंधं तस्मिन्हीयतां योस्मान्द्वेष्टि । शरीरं यज्ञशमलं कुसीदंतस्मिन्त्सीदतु योस्मान्द्वेष्टि । यज्ञयज्ञस्य यत्तेजस्तेन संक्राम मामभि । ब्राह्मणानृत्विजोदेवान्यज्ञस्य तपसा ते सवाहमाहुवे । इष्टेन पक्वमुप (१) ते हुवे सवाहम् । संते वृंजे सुकृतं संप्रजां पशून् । प्रैषान्त्सामिधेनीराघारावाज्यभागावाश्रुतं प्रत्याश्रुतमाशृणामि ते । प्रयाजानूयाजान्त्स्विष्टकृतमिडामाशिषआवृंजे सुवः । अग्निनेंद्रेण सोमेन सरस्वत्या विष्णुना देवताभिः । या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्यानुवाक्याभ्यामुपते ह्वे सवाहं यज्ञमाददेतेवषट्कृतम् । स्तुत५शस्त्रं प्रतिगरं ग्रहमिडामाशिषः (२) आवृंजे सुवः । पत्नीसंयाजानुपते ह्वे सवाह५ समिष्टयजुराददेतव । पशून्त्सुतं पुरोडाशान्त्सवनान्योतयज्ञम् । देवान्त्सेंद्रानुपते ह्वेसवाहमग्निमुखान्त्सोमवतोयेचविश्वे — ३२ ) [ उपाशिषेद्वात्रिंशच्च ] ॥ ११ ॥ भूतं भव्यं भविष्यद्वषट्त्स्वाहा नमऋक्साम यजुर्वषट्त्स्वाहा नमोगायत्री त्रिष्टुब्जगती वषट्त्स्वाहा नमः पृथिव्यंतरिक्षं द्यौर्वषट्त्स्वाहा नमोग्निर्वायुः सूर्योवषट्त्स्वाहा नमः प्राणोव्यानोपानोवषट्त्स्वाहा नमोन्नं कृषिर्वृष्टिर्वषट्त्स्वाहा नमः पिता पुत्रः पौत्रोवषट्त्स्वाहा नमोभूर्भुवः (१) सुवर्वषट्त्स्वाहा नमः — ४ ) [ भुवश्चत्वारिच ] ॥ १२ ॥ आमेगृहाभवंत्वाप्रजामआमायज्ञोविशतु वीर्यावान् । आपोदेवीर्यज्ञियामाविशंतु सहस्रस्य माभूमामा प्रहासीत् । आमे ग्रहोभवत्वापुरोरुक्स्तुतशस्त्रे माविशताः५ समीची । आदित्यारुद्रावसवोमे सदस्याः सहस्रस्य माभूमामा प्रहासीत् । आमाग्निष्टोमोविशतु ( १ ) उक्थ्यश्चातिरात्रोमाविशत्वापि शर्वरः । तिरोअह्निया मासुहुताआविशंतु सहस्रस्य माभूमामा प्रहासीत्—१८) [ विशत्वष्टादशच ) ॥ १३ ॥ अग्निना तपोन्वभवद्वाचा ब्रह्म मणिना रूपाणींद्रेण देवान्वातेन प्राणान्त्सूर्येण द्यां चंद्रमसा नक्षत्राणि यमेन पितॄन्राज्ञा मनुष्यान्फलेन देयानजगरेण सर्पान्व्याघ्रेणारण्यान् पशूञ्छ्येनेनपतत्रिणोवृष्णाश्वानृषभेण गावस्तेनाजाद्वृष्णिनावीर्व्रीहिणान्नानि यवेनौषधीन्यग्रोधेन वनस्पतीनुदुंबरेणोर्जं गायत्रियां छंदा५सि त्रिवृता स्तोमान्ब्राह्मणे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नं (१) वाचम्—१) [ ब्राह्मणे नैकंच ) ॥१४॥ स्वाहाधिमाधीताय स्वाहा स्वाहाधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहादित्यै स्वाहादित्यै मह्यै स्वाहा दित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा पूष्णे स्वाहापूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रेपुरुरूपाय स्वाहा (१) विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहा सर्वस्मै स्वाहा—१० ) ( स्वाहादशच ) ॥ १५ ॥ दद्भ्यः स्वाहा हनूभ्याᳪं स्वाहोष्ठाभ्याᳪं स्वाहा मुखाय स्वाहा नासिकाभ्याᳪं स्वाहाक्षीभ्याᳪं स्वाहा कर्णाभ्याᳪं स्वाहा पारइक्षवोवार्येभ्यः स्वपक्ष्मभ्यः स्वाहा वारइक्षवः पार्येभ्यः पक्ष्मभ्यः स्वाहा शीर्ष्णे स्वाहा भ्रूभ्याᳪं स्वाहा ललाटाय स्वाहा मूर्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यः स्वाहा वहाय स्वाहा ग्रीवाभ्यः स्वाहा स्कंधेभ्यः स्वाहा कीकसाभ्यः स्वाहा पृष्टीभ्यः स्वाहा पाजस्याय स्वाहा पार्श्वाभ्याᳪं स्वाहा ( १ ) अᳪंसाभ्याᳪं स्वाहा दोषभ्याᳪं स्वाहा बाहुभ्याᳪं स्वाहा जंघाभ्याᳪं स्वाहा श्रोणीभ्याᳪं स्वाहोरुभ्याᳪं स्वाहा ष्ठीवद्भ्याᳪं स्वाहा जंघाभ्याᳪं स्वाहा भसदे स्वाहा शिखंडेभ्यः स्वाहा वालधानाय स्वाहांडाभ्याᳪं स्वाहा शेपाय स्वाहा रेतसे स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा पद्भ्यः स्वाहा शफेभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा लोहिताय स्वाहा माᳪंसाय स्वाहा स्नावभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा ( २ ) अंगेभ्यः स्वाहात्मने स्वाहा सर्वस्मै स्वा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हा —६) [स्वाहास्वाहाषट्च] ॥ १६ ॥ अंज्येताय स्वाहाँजिसक्थाय स्वाहा शितिपदे स्वाहा शितिककुदे स्वाहा शितिरंध्राय स्वाहा शितिपृष्ठाय स्वाहा शित्यꣳसाय स्वाहा पुष्पकर्णाय स्वाहा शित्योष्ठाय स्वाहा शितिभ्रवे स्वाहा शितिभसदे स्वाहा श्वेतानूकाशाय स्वाहांजये स्वाहा ललामाय स्वाहा सितज्ञवे स्वाहा कृष्णैताय स्वाहा रोहितैताय स्वाहारुणैताय स्वाहेदृशाय स्वाहा कीदृशाय स्वाहा तादृशाय स्वाहा सदृशाय स्वाहा विसदृशाय स्वाहा सुसदृशाय स्वाहा रूपाय स्वाहा (१) सर्वस्मै स्वाहा —२) [स्वाहाद्वेच] ॥ १७ ॥ कृष्णाय स्वाहा श्वेताय स्वाहा पिशंगाय स्वाहा सारंगाय स्वाहारुणाय स्वाहा गौराय स्वाहा बभ्रवे स्वाहा नकुलाय स्वाहा रोहिताय स्वाहा शोणाय स्वाहा श्यावाय स्वाहा श्यामाय स्वाहा पाकलाय स्वाहा सुरूपाय स्वाहानुरूपाय स्वाहा विरूपाय स्वाहा सरूपाय स्वाहा प्रतिरूपाय स्वाहा शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा पृश्निसक्थाय स्वाहा सर्वस्मै स्वाहा —४६) [कृष्णायषट्चत्वारिꣳशत्] ॥ १८ ॥ ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहा कांडेभ्यः स्वाहा वल्शेभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः स्वाहागृहीतेभ्यः स्वाहावपन्नेभ्यः स्वाहा शयानेभ्यः स्वाहा सर्वस्मै स्वाहा —२४) [ओषधीभ्यश्चतुर्विꣳशतिः] ॥ १९ ॥ वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहा स्कंधेभ्यः स्वाहा शाखाभ्यः स्वाहा पर्णेभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः स्वाहा गृहीतेभ्यः स्वाहावपन्नेभ्यः स्वाहा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शयानेभ्यः स्वाहा शिष्टाय स्वाहातिशिष्टाय स्वाहा परिशिष्टाय स्वाहा सꣳशिष्टाय स्वाहोच्छिष्टाय स्वाहा रिक्ताय स्वाहारिक्ताय स्वाहा प्ररिक्ताय स्वाहा सꣳरिक्ताय स्वाहोद्रिक्ताय स्वाहा सर्वस्मै स्वाहा— ४६ ) [ वनस्पतिभ्यःषट्चत्वारिꣳशत् ] ॥ २० ॥ प्रजवं ( २०१ ) ब्रह्मवादिनं ( ११ ) एष ( ८३ ) आदित्याः ( ८४ ) प्रजापति ( १८१ ) रिन्द्र ( १०१ ) इन्द्रः ( २०२ ) प्रजापतिः ( ८७ ) सा ( १७३ ) सा ( २७१ ) वर्वाङ् ( १३२ ) भूत ( ५४ ) मा ( ६८ ) ग्निना ( ५१ ) स्वाहा ( ६५ ) दद्भ्यो ( १०६ ) श्येताय ( ५२ ) कृष्णायौ ( ४६ ) षधीभ्यो ( २४ ) वनस्पतिभ्यो ( ४६ ) विꣳशतिः ( २११८ ) ॥ २० ॥ इतितैत्तिरीयसंहितायांसप्तमकाण्डेतृतीयप्रपाठकः ॥

॥ हरिः ओम् ॥ बृहस्पतिरकामयत श्रन्मे देवादधीरन्गच्छेयं पुरोधामिति सएतं चतुर्विꣳशतिरात्रमपश्यत्तमाहरत्तेनायजत ततोवै तस्मै श्रद्देवाअदधतागच्छत्पुरोधां यएवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते श्रदेभ्योमनुष्यादधते गच्छंति पुरोधां ज्योतिर्गौरायुरिति त्र्यहाभवंतीयं वाव ज्योतिरंतरिक्षंगौरसावायुः ( १ ) इमानेव लोकानभ्यारोहंत्यभिपूर्वं त्र्यहाभवंत्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहंत्यसत्रं वा एतद्यदछंदोमंयच्छंदोमाभवंति तेन सत्रं देवताएव पृष्ठैरवरुंधते पशूञ्छंदोमैरोजोवै वीर्यं पृष्ठानि पशवश्छंदोमाओजस्येव वीर्यं पशुषु प्रतितिष्ठंति बृहद्रथंतराभ्यायंतीयं वाव रथंतरमसौ बृहदाभ्यामेव ( २ ) यंत्यथो अनयोरेव प्रतितिष्ठंत्येते वै यज्ञस्यांजसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यंति चतुर्विꣳशतिरात्रोभवति चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरः सुव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गौर्लोकः संवत्सरएव सुवर्गे लोके प्रतितिष्ठंत्यथो चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमवरुंधतेतिरात्रावभितोभवतोब्रह्मवर्चसस्य परिगृहीत्यै — ४५) [आयुरेवपंचचत्वारिꣳशच्च] ॥१॥ यथावै मनुष्याएवं देवाअग्रआसन्तेकामयंतावर्तिंपाप्मानं मृत्युमपहत्य दैवीꣳसꣳसदं गच्छेमेति तएतं चतुर्विꣳशतिरात्रमपश्यन्तमाहरन्तेनायजंत ततोवै तेवर्तिंपाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदमगच्छन्यएवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासतेवर्तिमेवपाप्मानमपहत्यश्रियं गच्छंति श्रीर्हि मनुष्यस्य (१) दैवीसꣳसज्ज्योतिरतिरात्रोभवति सुवर्गस्य लोकस्यानुख्यात्यै पृष्ठ्यः षडहोभवति षड्वाऋतवः संवत्सरस्तं मासाअर्धमासाऋतवः प्रविश्य दैवीꣳ सꣳसदमगच्छन्यएवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते संवत्सरमेव प्रविश्य वस्यसीꣳ सꣳसदं गच्छंति त्रयस्त्रयस्त्रिꣳशाअवस्ताद्भवंति त्रयस्त्रयस्त्रिꣳशाःपरस्तात्त्रयस्त्रिꣳशैरेवोभयतोवर्तिं पाप्मानमपहत्य दैवीꣳ सꣳसदं मध्यतः (२) गच्छंति पृष्ठानि हि दैवीसꣳसज्जामिवाएतत्कुर्वंति यत्त्रयस्त्रयस्त्रिꣳशाअन्वंचोमध्ये निरुक्तोभवति तेनाजाम्यूर्ध्वानि पृष्ठानि भवंत्यूर्ध्वाश्छंदोमाउभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं यंत्यसत्त्रं वाएतद्यदछंदोमं यच्छंदोमाभवंति तेन सत्त्रं देवताएव पृष्ठैरवरुंधते पशून्छंदोमैरोजोवै वीर्यं पृष्ठानि पशवः (३) छंदोमाओजस्येव वीर्ये पशुषु प्रतितिष्ठंति त्रयस्त्रयस्त्रिꣳशाअवस्ताद्भवंति त्रयस्त्रयस्त्रिꣳशाः परस्तान्मध्ये पृष्ठान्युरोवै त्रयस्त्रिꣳशाआत्मा पृष्ठान्यात्मनएव तद्यजमानाः शर्मनह्यंतेनार्त्यैबृहद्रथंतराभ्यां यंतीयं वाव रथंतरमसौ बृहदाभ्यामेव यंत्यथो अनयोरेव

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रतितिष्ठंत्येते वै यज्ञस्यांजसायनीसुती ताभ्यामेव ( ४ ) सुवर्गं लोकं यंति परांचोवाएते- सुवर्गं लोकमभ्यारोहंति येपराचीनानि पृष्ठान्युपयंति प्रत्यङ्षडहोभवति प्रत्यवरुढ्याअथो- प्रतिष्ठित्याउभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठंति त्रिवृतोधित्रिवृतमुप यंति स्तोमाना॑ संपत्यै प्रभवाय ज्योतिरग्निष्टोमोभवत्ययं वाव सक्षयोस्मादेव तेन क्षयान्नयंति चतुर्विंशतिरात्रोभवति चतुर्विंशतिरर्धमासाः संवत्सरः ( ५ ) संवत्सरः सुवर्गोलोकः संवत्सरएव सुवर्गे लोके प्रतितिष्ठंत्यथो चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमवरुंधते तिरात्रावभितोभवतोब्रह्मवर्चसस्यपरिगृहीत्यै — २४ ) [ मनुष्यंस्यमध्यतःपशवएवसंवत्स- रश्चतुर्विंशतिश्च ] ॥ २ ॥ ऋक्षावाइयमलोमकासीत्साकामयतौषधीभिर्वनस्पतिभिः प्रजा- येयेति सैतास्त्रिंशत॑ रात्रीरपश्यत्ततोवाइयमोषधीभिर्वनस्पतिभिः प्राजायत ये प्रजाकामाः प- शुकामास्युस्तएताआसीरन्प्रैवजायंते प्रजया पशुभिरियं वा अक्षुध्यत्सैतां विराजमपश्यत्तामात्म- न्धित्वान्नाद्यमवारुंधौषधीः ( १ ) वनस्पतीन्प्रजां पशूंस्तेनावर्धत साजेमानं महिमानमगच्छद्य- एवं विद्वा॑सएताआसते विराजमेवात्मंधित्वान्नाद्यमवरुंधे ते वर्धंते प्रजया पशुभिर्जेमानं महि- मानं गच्छंति ज्योतिरतिरात्रोभवति सुवर्गस्य लोकस्यानुख्यात्यै पृष्ठ्यः षडहोभवति षड्वाऋतवः षड्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहंत्यृतुभिः संवत्सरं ते संवत्सरएव ( २ ) प्रतितिष्ठंति त्रयस्त्रिं॑शात्त्रय- स्त्रिं॑शमुपयंति यज्ञस्य संतत्याअथो प्रजापतिर्वै त्रयस्त्रिं॑शः प्रजापतिमेवारभंते प्रतिष्ठित्यै

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्रिणवोभवति विजित्याएकवि्ँशोभवति प्रतिष्ठित्याअथो रुचमेवात्मन्दधते त्रिवृदग्निष्टुद्भवति पाप्मानमेव तेननिर्दहंतेथो तेजोवैत्रिवृत्तेजएवात्मंदधते पंचदशइंद्रस्तोमोभवतींद्रियमेवाव (३) रुंधते सप्तदशोभवत्यन्नाद्यस्यावरुध्याअथो प्रैव तेन जायंतएकवि्ँशोभवति प्रतिष्ठित्याअथो रुचमेवात्मन्दधते चतुर्वि्ँशोभवति चतुर्वि्ँशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गोलोकः संवत्सरएव सुवर्गे लोके प्रतितिष्ठंत्यथो एषवै विषूवान् विषूवंतोभवंति यएवं विद्वा्ँसएताआसते चतुर्वि्ँशात्पृष्ठान्युपयंति संवत्सरएव प्रतिष्ठाय (४) देवताअभ्यारोहंति त्रयस्त्रि्ँशात्त्रयस्त्रि्ँशमुपयंति त्रयस्त्रि्ँशद्वै देवतादेवतास्वेव प्रतितिष्ठंति त्रिणवोभवतीमे वै लोकास्त्रिणवएष्वेव लोकेषु प्रतितिष्ठंति द्वावेकवि्ँशोभवतः प्रतिष्ठित्याअथो रुचमेवात्मन्दधते बह्वः षोडशिनोभवंति तस्माद्बह्वः प्रजासु वृषाणोयदेते स्तोमाव्यतिषक्ताभवंति तस्मादियमोषधीभिर्वनस्पतिभिर्व्यतिषक्ता (५) व्यतिषज्यंते प्रजया पशुभिर्यएवं विद्वा्ँसएताआसते कॢप्तावाएते सुवर्गं लोकं यंत्युच्चावचान् हि स्तोमानुपयंति यदेतऊर्ध्वाः कॢप्ताः स्तोमाभवंति कॢप्ताएव सुवर्गं लोकं यंत्युभयोरेभ्योलोकयोः कल्पते। त्रि्ँशदेतास्त्रि्ँशदक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुंधतेतिरात्रावभितोभवतोन्नाद्यस्य परिगृहीत्यै (४१) [ओषधीरेवावप्रतिष्ठायव्यतिषक्तैकान्नपंचाशच्च] ॥ ३॥

प्रजापतिः सुवर्गं लोकमैत्तं देवायेनयेन छंदसानुप्रायुंजत तेन नाप्नुवन्तएताद्वात्रि्ँशतं रात्रीरपश्यन्द्वात्रि्ँशदक्षरानुष्टुग्गानुष्टुभः प्रजापतिः स्वेनैव छंदसा प्रजापतिमाप्त्वाभ्यारुह्य सुवर्गं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



लोकमायन् यएवं विद्वाꣳसएता आसते, द्वात्रिꣳशदेताद्वात्रिꣳशदक्षरानुष्टुगानुष्टुभः प्रजापतिः स्वेनैव छंदसा प्रजापतिमाप्त्वाश्रियं गच्छंति (१) श्रीर्हिमनुष्यस्य सुवर्गोलोकोद्वात्रिꣳशदेताद्वात्रिꣳशदक्षरानुष्टुग्वागनुष्टुप्सर्वामेव वाचमाप्नुवंति सर्वे वाचोवदितारोभवंति सर्वे हि श्रियं गच्छंतिज्योतिर्गौरायुरिति त्र्यहाभवंतीयं वाव ज्योतिरंतरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहंत्यभि पूर्वंत्र्यहा भवंत्यभि पूर्वमेव सुवर्गं लोकमभ्यारोहंति बृहद्रथंतराभ्यां यंति (२) इयं वाव रथंतरमसौ बृहदाभ्या मेव यंत्यथो अनयोरेव प्रतितिष्ठंत्येते वै यज्ञस्यांजसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यंति परांचोवा एते सुवर्गं लोकमभ्यारोहंति ये परांचस्त्र्यहानुपयंति प्रत्यङ्त्र्यहोभवति प्रत्यवरूढ्या अथो प्रतिष्ठित्याउभयोर्लोकयोर्ऋध्वोत्तिष्ठंतिद्वात्रिꣳशदेतास्तासां यास्त्रिꣳशस्त्रिꣳशदक्षरा (३) विराडन्नं विराड्विराजैवान्नाद्यमवरुंधते ये द्वे अहोरात्रे एव ते उभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं यंत्यतिरात्रावभितोभवतः परिगृहीत्यै — २२) [ गच्छंतियंतित्रिꣳशदक्षराद्वाविꣳशतिश्च ] ॥ ४ ॥

देवाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिꣳशदहश्च यएवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते साक्षादेवदेवता अभ्यारोहंति यथा खलु वै श्रेयानभ्यारूढःकामयते तथा करोति यद्यवविध्यतिपापीयान्भवति यदिनावविध्यति सदृङ्यएवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते विपाप्मना भ्रातृव्येणावर्ततेहर्भाजो वाएतादेवाअग्र आहरन् (१) अहरेकोभजताहरेकस्ताभिर्वैते प्रबाहुगार्ध्नुवन्यएवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते सर्वएव प्रबाहुगृध्नुवंति सर्वेग्रामणीयं प्राप्नुवंति पंचाहाभवंति पंच वा ऋतवः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संवत्सरऋतुष्वेव संवत्सरे प्रतितिष्ठंत्यथो पंचाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवावरुंधते त्रीण्याश्वि-
नानि भवंति त्रय इमे लोका एषु (२) एव लोकेषु प्रतितिष्ठंत्यथो त्रीणि वै यज्ञस्येंद्रियाणि
तान्येवावरुंधते विश्वजिद्भवत्यन्नाद्यस्यावरुध्यै सर्वपृष्ठो भवति सर्वस्याभिजित्यै वाग्वै द्वादशाहो
यत्पुरस्ताद्द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुपदासुकैषां वाक्स्यादुपरिष्टाद्द्वादशाहमुपयंत्याप्तामेव वा-
चमुपयंति तस्मादुपरिष्टाद्वाचा वदामोऽवांतरं (३) वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्द-
शरात्रो भवति प्रजा एव तद्यजमानाः सृजंत एताꣳ ह वा उदंकः शौल्बायनः सत्रस्यर्धिमुवाच यद्द-
शरात्रो यद्दशरात्रो भवति सत्रस्यर्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवैषा शांतिः
द्व्यनीका वा एता रात्रयो यजमाना विश्वजिता सहातिरात्रेण पूर्वाः षोडश सह (४) अतिरात्रेणोत्तराः
षोडश य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासत एषां द्व्यनीका प्रजा जायते अतिरात्रावभितो
भवतः परिगृहीत्यै. — १७) [अहरन्नेष्ववांतरꣳ सह सप्तदश च] ५॥ आदित्या अकामा
यंत सुवर्गं लोकमियामेति ते सुवर्गं लोकं न प्राजानन्न सुवर्गं लोकमायन्त एतꣳ षट्त्रिꣳशद्रात्र-
मपश्यन्तमाहरन्तेनायजंत ततो वै ते सुवर्गं लोकं प्राजानन्त्सुवर्गं लोकमायन्य एवं विद्वाꣳसः षट्त्रिꣳ-
शद्रात्रमासते सुवर्गमेव लोकं प्रजानंति सुवर्गं लोकं यंति ज्योतिरतिरात्रः (१) भवति ज्योति-
रेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै षडहा भवंति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठंति चत्वारो
भवंति चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठंत्यसत्त्रं वा एतद्यदछंदोमं यच्छंदोमा भवंति तेन सत्त्रं देवता एव

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पृष्ठैरवरुंधते पशून्छंदोभिरोजोवै वीर्यं पृष्ठानि पशवश्छंदांस्योजस्येव (२) वीर्यं पशुषु प्रतितिष्ठंति षड्त्रिंशद्रात्रोभवति षड्त्रिंशदक्षरा बृहती बार्हताः पशवोबृहत्यैव पशूनवरुंधते बृहतीछंदसा स्वाराज्यमाश्नुताश्नुवते स्वाराज्यं यएवं विद्वांसः षड्त्रिंशद्रात्रमासते सुवर्गमेव लोकं यंत्यतिरात्रावभितोभवतः सुवर्गस्य लोकस्य परिगृहीत्यै — ३६ ) [ अतिरात्रएवषड्त्रिंशच्च ] ॥ ६ ॥ वसिष्ठोहतपुत्रोकामयत विंदेय प्रजामभिसौदासान्भवेयमिति सएतमेकस्मान्नपंचाशमपश्यत्तमाहरत्तेनायजत ततोवै सोविंदत प्रजामभिसौदासानभवद्यएवं विद्वांसएकस्मान्न पंचाशमासते विंदंते प्रजामभिभ्रातृव्यान्भवंति त्रयंस्त्रिवृतोग्निष्टोमाभवंति वज्रस्यैव मुखंसंश्यंति दश पंचदशाभवंति पंचदशोवज्रः ( १ ) वज्रमेव भ्रातृव्येभ्यः प्रहरंति षोडशिमद्दशममहर्भवति वज्रएव वीर्यं दधति द्वादश सप्तदशाभवंत्यन्नाद्यस्यावरुध्याअथो प्रैव तैर्जायंते पृष्ठ्यः षडहोभवति षड्वाऋतवः षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोहंत्यृतुभिः संवत्सरं ते संवत्सरएव प्रतितिष्ठंति द्वादशैकविंशाभवंति प्रतिष्ठित्याअथो रुचमेवात्मन् ( २ ) दधते बह्वः षोडशिनोभवंति विजित्यै षडाश्विनानि भवंति षड्वाऋतवऋतुष्वेव प्रतितिष्ठंत्यूनातिरिक्तावा एतारात्रयऊनास्तद्यदेकस्यै न पंचाशदतिरिक्तास्तद्यद्भूयसीरष्टाचत्वारिंशतऊनाच्च खलु वा अतिरिक्ताच्च प्रजापतिः प्राजायत ये प्रजाकामाः पशुकामाः स्युस्तएताआसीरन्प्रैव जायंते प्रजया ( ३ ) पशुभिर्वैराजोवाएषयज्ञोयदेकस्मान्नपंचाशोयएवं विद्वांसएकस्मान्नपंचाशमासंते वि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation, Kolkata. Digitization: eGangotri.



राजमेव गच्छंत्यन्नादामंवंत्यतिरात्रावभितोभवतोन्नाद्यस्य परिगृहीत्यै— २२ ) [ वज्रंआत्मन्प्र-
जयाद्वाविंशतिश्च ] ॥ ७ ॥ संवत्सरायं दीक्षिष्यमाणाएकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी
यदेकाष्टकैतस्यां वाएषएतांꣳ रात्रिं वसति साक्षादेव संवत्सरमारभ्यं दीक्षंतआर्तं वाएते संवत्सरस्या
भिदीक्षंते यएकाष्टकायां दीक्षंतेंतंनामानावृतूभंवतोव्यस्तं वाएते संवत्सरस्याभिदीक्षंते यएकाष्टकायां
दीक्षंतेंतंनामानावृतूभंवतः फल्गुनी पूर्णमासे दीक्षेरन्मुखं वाएतत् ( १ ) संवत्सरस्य यत्फल्गुनी
पूर्णमासोमुखतएव संवत्सरमारभ्यं दीक्षंते तस्यैकैवनिर्यायत्साम्मेघ्ये विषूवान्त्संपद्यते चित्रापूर्ण
मासेदीक्षेरन्मुखंवाएतत्संवत्सरस्य यच्चित्रापूर्णमासोमुखतएव संवत्सरमारभ्यं दीक्षंते तस्यन
काचन निर्याभंवति चतुरहेपुरस्तात्पौर्णमास्यै दीक्षेरन्तेषामेकाष्टकायां क्रयः संपद्यते तेनैकाष्टकां
न छंबट्कुर्वंति तेषां ( २ ) पूर्वपक्षे सुत्या संपद्यते पूर्वपक्षं मासाअभिसंपद्यंते ते पूर्वपक्षउत्तिष्ठंति
तानुत्तिष्ठंतआषंधयोवनस्पतयोनूत्तिष्ठंति तान्कल्याणी कीर्तिरनूत्तिष्ठत्यरात्सुरिमेयजमानाइति
तदनुसर्वे राध्नुवंति—३४ ) [ एततेषांचतुस्त्रिꣳशच्च ] ॥ ८ ॥ सुवर्गं वाएते लोकं यंति ये सत्रमुप
यंत्यभींधतएव दीक्षाभिरात्मानꣳ श्रपयंतउपसद्भिर्द्वाभ्यां लोमावंद्यंति द्वाभ्यां त्वचं द्वाभ्यामसृद्वा-
भ्यां मांꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रमात्मानमेव दक्षिणां नीत्वा सु-
वर्गं लोकं यंति शिखामनुप्रवपंतऋध्याअथो रघीयाꣳसः सुवर्गं लोकमयामेति ( १ ) [ सुवर्गं
पंचाशत् ] ॥ ९ ॥ ब्रह्मवादिनोवदंत्यतिरात्रः परमोयज्ञक्रतूनां कस्मात्तं प्रथममुपयंती

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्येतद्वा अग्निष्टोमं प्रथममुपयंत्यथोक्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वमेवैतद्यज्ञक्रतूनुपेत्य तानाल भ्यपरिगृह्य सोममेवैतत्पिबंत आसते ज्योतिष्टोमं प्रथममुपयंति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान्प्रयुंजते ते (१) सꣳस्तुता विराजमभिसंपद्यंते द्वे चर्चावतिरिच्येते एकया गौरतिरिक्त एकयायुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराट्सुवर्गमेव तेन लोकं यंति रथंतरं दिवा भवति रथंतरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरं तृतीयसवने ब्रह्मसाम बृहत्तन्मध्यतो दधति विधृत्यै तेनाजामि—४९) [ तएकान्नपंचाशच्च ) ॥ १० ॥ ज्योतिष्टोमं प्रथममुपयंत्यस्मिन्नेव तेन लोके प्रतितिष्ठंति गोष्टोमं द्वितीयमुपयंत्यंतरिक्ष एव तेन प्रति तिष्ठंत्यायुष्टोमं तृतीयमुपयंत्यमुष्मिन्नेव तेन लोके प्रतितिष्ठंतीयं वाव ज्योतिरंतरिक्षं गौरसावायुर्यदेतान्स्तोमानुपयंत्येष्वेव तल्लोकेषु सत्रिणः प्रतितिष्ठंतो यंति ते सꣳस्तुता विराजं (१) अभिसंपद्यंते द्वे चर्चावतिरिच्येते एकया गौरतिरिक्त एकयायुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवावरुंधते तेन क्षुधार्तिमार्छंत्यक्षोधुका भवंति क्षुत्संबाधा इव हि सत्रिणोऽग्निष्टोमावभितः प्रधी तावुक्थ्यो मध्येन भ्यंतत्तदेतत्परियद्देवचक्रं यदेतेन (२) षडहेन यंति देवचक्रमेव समारोहंत्यरिष्ट्यै ते स्वस्ति समश्नुवते षडहेन यंति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठंत्युभयतो ज्योतिषा यंत्युभयत एव सुवर्गे लोके प्रतितिष्ठंतो यंति द्वौ षडहौ भवतस्तानि द्वादशाहानि संपद्यंते द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा च शिरश्च चत्वार्यंगानि स्तनौ द्वादशौ (३) तत्पुरुष

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.







मनुपर्यावर्तंते त्रयः षडहाभवंति तान्यष्टादशाहानि संपद्यंते नवान्यानि नवान्यानि नव वै पुरुषे प्राणास्तत्प्राणाननुपर्यावर्तंते चत्वारः षडहाभवंति तानि चतुर्विंशतिरहानि संपद्यंते चतुर्विंशतिरर्धमासाः संवत्सरस्तत्संवत्सरमनुपर्यावर्तंते प्रतिष्ठितः संवत्सरइति खलु वा आहुर्वर्षीयान्प्रतिष्ठायाइत्येतावद्वै (४) संवत्सरस्य ब्राह्मणं यावन्मासोमासिमास्येव प्रतितिष्ठंतोयंति—८) [ विराजमेतेनद्वादशौवाअष्टौच ) ॥ ११ ॥ मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः शल्मलिर्वृध्यापर्णोब्रह्मणा प्लक्षोमेधेन न्यग्रोधश्चमसैरुदुंबरऊर्जा गायत्रीछंदोभिस्त्रिवृत्स्तोमैरवंतीः स्थावंतीस्त्वावंतु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिꣳ हवामहे वसोमम—२६ ) [ मेषःषट्त्रिꣳशत् ) ॥ १२ ॥ कूप्याभ्यः स्वाहाकुल्याभ्यः स्वाहा विकर्याभ्यः स्वाहावट्याभ्यः स्वाहा खन्याभ्यः स्वाहा ह्रद्याभ्यः स्वाहा सूद्याभ्यः स्वाहा सरस्याभ्यः स्वाहा वैशंतीभ्यः स्वाहा पल्वल्याभ्यः स्वाहा वर्ष्याभ्यः स्वाहावर्ष्याभ्यः स्वाहा ह्रादुनीभ्यः स्वाहापृष्वाभ्यः स्वाहा स्यंदमानाभ्यः स्वाहा स्थावराभ्यः स्वाहा नादेयीभ्यः स्वाहा सैंधवीभ्यः स्वाहा समुद्रियाभ्यः स्वाहा सर्वाभ्यः स्वाहा—४० ) ( कूप्याभ्यश्चत्वारिꣳशत् ) ॥ १३ ॥ अद्भ्यः स्वाहा वहंतीभ्यः स्वाहा परिवहंतीभ्यः स्वाहा समंतंवहंतीभ्यः स्वाहा शीघ्रं वहंतीभ्यः स्वाहा शीभं वहंतीभ्यः स्वाहोग्रं वहंतीभ्यः स्वाहा भीमं वहंतीभ्यः स्वाहांभोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहा सर्वस्मै स्वाहा—२१ ) ( अद्भ्यएकान्नत्रिꣳशत् ) ॥ १४ ॥ योअर्वंतं जिघाꣳसति त-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मभ्यमीति वरुणः । परोमर्तः परश्वा । अहं च त्वं चंवृत्रहन्त्संबभूव सनिभ्यआ । अरातीवाचिदद्रिवो-नुनौ शूरमꣳसतैभद्राइंद्रस्य रातयः । अभिक्रत्वेंद्र भूरधज्मन्नतेविव्यङ्महिमानꣳरजाꣳसि । स्वेना-हिवृत्रꣳशवसा जघंथन शत्रुरंतं विविदत् (१) युधाते—२) [ विविदद्द्वे च ] ॥१५॥ नमोराज्ञे नमोव रुणाय नमोश्वाय नमः प्रजापतये नमोधिपतयेधिपतिरस्यधिपतिं माकुर्वधिपतिरहं प्रजानां भूयासं मां धेहि मयि धेह्युपाकृताय स्वाहा लब्धाय स्वाहा हुताय स्वाहा — २९ ) [ नमएकान्नत्रिꣳशत् ] ॥ १६.॥ मयोभूर्वातोअभिवातूस्राऊर्जस्वतीरोषधीराररिशंतां । पीवस्वतीर्जीवधन्याः पिबंत्ववसा यं पद्वतेरुद्रमृड । याः सरूपाविरूपाएकरूपायासामग्निरिष्ट्यानामानि वेद । याअंगिरसस्तपसे हच-कुस्ताभ्यः पर्जन्यमहिशर्म यच्छ । यादेवेषु तनुवमैरयंत यासाꣳ सोमोविश्वारूपाणि वेद । ताअ-स्मभ्यं पयसा पिन्वमानाः प्रजावतीरिंद्र ( १ ) गोष्ठे रिरीहि । प्रजापतिर्मह्यमेताररराणोवि श्वदेवैः पितृभिः संविदानः । शिवाः सतीरुपनोगोष्ठमाकस्तासां वयं प्रजया सꣳसदेम । इह धृतिः स्वाहेह विधृतिः स्वाहेहरंतिः स्वाहेहरमतिः स्वाहा महीमूषु सुत्रामाणं — ३८ ) [ इंद्रा-ष्टात्रिꣳशच्च ], ॥ १७ ॥ किꣳस्विदासीत्पूर्वचित्तिः किꣳस्विदासीद्बृहद्वयः । किꣳस्विदासी-त्पिशंगिला किꣳस्विदासीत्पिलिप्पिला । द्यौरासीत्पूर्वचित्तिरश्वआसीद्बृहद्वयः । रात्रिरासीत्पिशं गिलाविरासीत्पिलिप्पिला । कः स्विदेकाकी चरति कउ स्विज्जायते पुनः । किꣳस्विद्धिमस्य भेषजं किꣳस्विदावपनं महत् । सूर्यएकाकी चरति ( १ ) चंद्रमा जायते पुनः । अग्निर्हिमस्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भेषजं भूमिरावपनं महत् । पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम । वेदिमाहुः परमन्तं पृथि-
व्यायज्ञमाहुर्भुवनस्य नाभिं । सोममाहुर्वृष्णोअश्वस्य रेतोब्रह्मैव वाचः परमं व्योम— ४६ )
[ चरतिषट्चत्वारिंशच्च ] ॥ १८ ॥ अंबे अंबाल्यंबिके नमानयति कश्चन । ससस्त्यश्वकः ।
सुभगे कांपीलवासिनि सुवर्गे लोके संप्रोर्ण्वाथां । आहमजानि गर्भधमात्वमजासि गर्भधं ।
तौसहचतुरः पदः संप्रसारयावहै । वृषावाꣳ रेतोधारेतोदधातूत्सक्थ्योर्गृदंधेह्यंजिमुदं जिम-
न्वज । यःस्त्रीणां जीवभोजनोयआसां ( १ ) बिलधावनः । प्रियःस्त्रीणामपीच्यः । यआ-
सांकृष्णे लक्ष्मणि सर्दिगृदिंपरावधीत् । अंबे अंबाल्यंबिके न मायभाति कश्चन । सस-
स्त्यश्वकः । ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारं गिराविव । अथास्यामध्यमेधताꣳ शीते वाते पुनन्नि-
व । अंबे अंबाल्यंबिके नमायभति कश्चन । ससस्त्यश्वकः । यद्धरिणीयवमत्तिन ( २ )
पुष्टं पशुमन्यते । शूद्रायदर्यजारानपोषायधनायति । अंबे अंबाल्यंबिके नमायभतिकश्चन । स-
सस्त्यश्वकः । इयंयकाशकुंतिकाहलमिति सर्पति । आहतंगभेपसोनिजल्गुलीतिधाणिका । अंबे
अंबाल्यंबिके न मायभति कश्चन । ससस्त्यश्वकः । माता च ते पिता च तेग्रंवृक्षस्य रोहतः ( ३ ) ।
प्रसुलामीति ते पितागभेमुष्टिमतꣳसयत् । दधिक्राव्णोअकारिषं जिष्णोरश्वस्य वाजिनः । सुर-
भिनोमुखाकरत्प्रणआयूꣳषि तारिषत् । आपोहिष्ठामयोभुवस्तानऊर्जेदधातन । महेरणाय चक्ष-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



से। योवः शिवतमोरसस्तस्य भाजयते हनः। उशतीरिव मातरः। तस्मा अरंगमामवोयस्य क्षयाय जिन्वथ (४)। आपोजनयथाचनः— ४) [आसांनरोहतोजिन्वथचत्वारिंच]॥ १९॥ भूर्भुवः सुवर्वसवस्त्वांजंतु गायत्रेण छंदसा रुद्रास्त्वांजंतु त्रैष्टुभेन छंदसादित्यास्त्वांजतु जागतेन छंदसा यद्वातोअपोअगमदिंद्रस्य तनुवं प्रियाम्। एतश्स्तोतरेतेन पथा पुनरश्वमावर्तयासिनः। लाजी ३ न्छाची ३ न्यशोममाम् ३। यव्यायै गव्यायाएतद्देवाअन्नमत्तैतदन्नमद्धिप्रजापते। युजंति ब्रध्नं (१) अरुषं चरंतंपरितस्थुषः। रोचंते रोचनादिवि। युंजंत्यस्य काम्या हरी विपक्षसारथे। शोणाधृष्णू नृवाहसा। केतुं कृण्वन्न केतवे पेशोमर्याअपेशसे। समुषद्भिरजायथाः— २५) [ब्रध्नंपंचविंशतिश्च]॥ २०॥ प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा स्नावभ्यः स्वाहा संतानेभ्यः स्वाहा परिसंतानेभ्यः स्वाहा पर्वभ्यः स्वाहा संधानेभ्यः स्वाहा शरीरेभ्यः स्वाहा यज्ञाय स्वाहा दक्षिणाभ्यः स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा— २८) [प्राणायाष्टाविंशतिः]॥ २१॥ सिताय स्वाहासिताय स्वाहाभिहिताय स्वाहानभिहिताय स्वाहा युक्ताय स्वाहायुक्ताय स्वाहा सुयुक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा प्रमुक्ताय स्वाहावंचते स्वाहा परिवंचते स्वाहा संवंचते स्वाहानुवंचते स्वाहोद्वंचते स्वाहायते स्वाहा धावते स्वाहा तिष्ठते स्वाहा सर्वस्मै स्वाहा— ३) ] सितायाष्टात्रिंशत्]॥ २२॥ बृहस्पति (१४५) यथ (२७४) क्षाः (२९९) प्रजापति (१७२) दे (२१७) आदित्या (१३६)

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वसिष्ठः ( १७२ ) संवत्सराय ( १३४ ) सुवर्गं ( ५० ) ब्रह्मवादिनो ( ९९ ) ज्योतिष्टोमं ( २०८ ) मेषः ( ३६ ) कूप्याभ्यो ( ४० ) ध्वो ( २९ ) यो ( ५२ ) नमो ( २९ ) मयोभूः ( ८८ ) किमं ( ९६ ) वे ( २०४ ) भूः ( ७५ ) प्राणाय ( २८ ) सिताय ( ३८ ) द्वाविंशतिः ( २६२१ ) ॥ २२ ॥ इतितैत्तिरीयसंहितायांसप्तमकाण्डेचतुर्थप्रपाठकः ॥ ४ ॥

हरिःओम् ॥ गावोवाएतत्सत्रमासताशृंगाःसतीः शृंगाणि नोजायंताइति कामेन तासां दश मासानिषण्णाआसन्नथ शृंगाण्यजायंत ताउदतिष्ठंनरात्स्मेत्यथ यासां नाजायंत ताः संवत्सरमाप्त्वो दतिष्ठन्नरात्स्मेति यासां चाजायंत यासां च नताउभयीरुदतिष्ठन्नरात्स्मेति गोसत्रं वै ( १ ) संवत्सरोयएवं विद्वाꣳसः संवत्सरमुपयंत्यृध्नुवंत्येव तस्मात्तूपरावार्षिकौ मासौ पत्वी चरति सत्राभिजितꣳ ह्यस्यै तस्मात्संवत्सरसदो यत्किंच गृहे क्रियते तदाप्तमवरुद्धमभिजितं क्रियते समुद्रं वा एते प्रप्लवंते ये संवत्सरमुपयंति योवै समुद्रस्य पारं न पश्यंति नवै सततउदेति संवत्सरः ( २ ) वै समुद्रस्तस्यै तत्पारं यदतिरात्रौ यएवं विद्वाꣳसः संवत्सरमुपयंत्यनार्ताएवोदृचं गच्छंतीयं वै पूर्वोतिरात्रोसावुत्तरोमनः पूर्वोवागुत्तरः प्राणः पूर्वोपानउत्तरः प्ररोधनं पूर्वउदयनमुत्तरोज्योतिष्टोमोवैश्वानरोतिरात्रोभवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै चतुर्विꣳशः प्रायणीयोभवति चतुर्विꣳशतिरर्धमासाः ( ३ ) संवत्सरः प्रयंतएव संवत्सरे प्रतितिष्ठंति तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्सरस्य रात्रयउभे एव संवत्सरस्य रूपे आ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भुवंति ते सꣳस्थित्या अरिष्ट्या उत्तरैरहोभिश्चरंति षडहा भवंति षड्वा ऋतवः संवत्सर ऋतुष्वेव सं-
वत्सरे प्रतितिष्ठंति गौश्चायुश्च मध्यतः स्तोमौ भवतः संवत्सरस्यैव तन्मिथुनं मध्यतः (४)
दधति प्रजननाय ज्योतिरभितो भवति विमोचनमेव तच्छंदाꣳस्येव तद्विमोकं यंत्यथो उभय-
तोज्योतिषैव षडहेन सुवर्गं लोकं यंति ब्रह्मवादिनो वदंत्यासते केन यंतीति देवयानेन
पथेति ब्रूयाच्छंदाꣳसि वै देवयानः पंथा गायत्री त्रिष्टुब्जगती ज्योतिर्वै गायत्री गौस्त्रिष्टुगायुर्जग-
ती यदेते स्तोमा भवंति देवयानेनैव (५) तत्पथा यंति समानꣳ साम भवति देवलोको वै सा-
म देवलोकादेव नयंत्यन्या अन्या ऋचो भवंति मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्यमन्यं देव-
लोकमभ्यारोहंतो यंत्यभिवर्तो ब्रह्मसामं भवति सुवर्गस्य लोकस्याभिवृत्त्या अभिजिद्भवति सुवर्ग-
स्य लोकस्याभिजित्यै विश्वजिद्भवति विश्वस्य जित्यै मासिमासि पृष्ठान्युपयंति मासि-
मास्यतिग्राह्या गृह्यंते मासिमास्येव वीर्यं (६) दधति मासां प्रतिष्ठित्या उपरिष्टान्मासां पृष्ठान्युपयंति
तस्मादुपरिष्टादोषधयः फलं गृह्णंति — १३) [ वै संवत्सरोऽर्धमासा मध्यत एव वीर्यं त्रयोदश च ] ॥१॥
गावो वा एतत्सत्रमासताशृंगाः सतीः शृंगाणि सिषासंतीस्तासां दश मासा निषण्णा आसन्नथ शृंगा-
ण्यजायंत ता अब्रुवन्नरात्स्मोत्तिष्ठामाव तं काममरुत्स्महि येन कामेन न्यषदामेति तासामु त्वा अब्रु-
वन्नर्धा वा यावतीर्वा सामहा एवेमौ द्वादशौ मासौ संवत्सरꣳ संपाद्योत्तिष्ठामेति तासां (१) द्वादशे
मासि शृंगाणि प्रावर्तंत श्रद्धया वाश्रद्धया वा ता इमा यास्तूपरा उभय्यो वाव ता आर्ध्नुवन्याश्च शृं-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गाण्यसंन्वृन्याश्वोजैंमवारुंधतभ्नौंति दुशसुमासूंत्तिष्ठंन्नूभ्नोति द्वादशसु यएवं वेदं पदेन खलु वाएते यंति विंदति खलु वै पदेन यन्तद्वाएतत्टृद्धमयंनंतस्मात् (२) एतन्न्रोसनि —२ ) [ तासांतस्माद्वेच ] ॥ २ ॥ प्रथमे मासि पृष्ठान्युपंयंति मध्यमउपंयंत्युत्तमउपयंति तदाहुर्यांवै त्रिरेकस्याह्नउपसीदंति दु ह्वै सापराभ्यां दोहाभ्यां दुहेथ कुतः साधोक्ष्यते यां द्वादशकृत्वंउपसीदंतीति संवत्सरꣳ संपाद्यो त्तमे मासि सकृत्पृष्ठान्युपेयुस्तद्यजमानायज्ञं पशूनवंरुंधते समुद्रंवै ( १ ) एतेंनवारमंपारं प्रप्लवंते ये संवत्सरमुपयंति यद्बृहद्रथंतरे अन्वर्जैयुर्यथा मध्यें समुद्रस्य प्लवमन्वर्जैयुस्तादृक्तदनुत्सर्गं बृहद्रथंतरा भ्यामित्वा प्रतिष्ठां गच्छंति सर्वेभ्योवै कामेभ्यः संधिर्दुहेतद्यजमानाः सर्वान्कामानवंरुंधते —४ ) ( वैचतुस्त्रिꣳशच्च ) ॥ ३ ॥ समान्यं ऋचोभवंति मनुष्यलोकोवाऋचोमनुष्यलोकादेव नयंत्यन्य दन्यत्साम भवति देवलोकोवै साम देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहंतोयंति जगतीमग्र- उपयंति जगती वै छंदाꣳसि प्रत्यवरोहत्याग्रयणं ग्रहांबृहत्पृष्ठानि त्रयस्त्रिꣳशꣳ स्तोमास्तस्मा- ज्ज्यायाꣳसं कनीयान्प्रत्यवरोहति वैश्वकर्मणोगृह्यते विश्वान्येव तेन कर्माणि यजमानाअवरुं- धतआदित्यः ( १ ) गृह्यतइयं वाअदितिरस्यामेव प्रतितिष्ठंत्यन्योन्योगृह्येते मिथुनत्वाय प्रजात्याअवांतरं वै दशरात्रेण प्रजापतिः प्रजाअसृजत यद्दशरात्रोभवंति प्रजाएव तद्यजमानाः सृजंतएताꣳ हवाउदंकः शौल्बायनः सत्रस्यर्धिमुवाच यद्दशरात्रोयद्दशरात्रोभवंति सत्रस्यर्ध्यै अथो यदेव पूर्वेष्वहःसु विलोमक्रियते तस्यैव ( २ ) एषाशांतिः— २ ) [ आदित्यएवद्वेच ]

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



॥ ४ ॥ यदि सोमौ सꣳसुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यात्पूर्वो वाचंपूर्वो देवताः पूर्वश्छंदाꣳसि वृङ्क्ते वृषण्वतीं प्रतिपदं कुर्यात्प्रातःसवनादेवैषामिंद्रं वृङ्क्तेथो खल्वाहुः सवनमुखे सवनमुखे कार्येति सवनमुखात्सवनमुखादेवैषामिंद्रं वृङ्क्ते संवेशायोपवेशायगायत्रियास्त्रिष्टुभोजगत्याअनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहा छंदाꣳसि वै संवेशउपवेशश्छंदोभिरेवैषां (१) छंदाꣳसिवृङ्क्ते सजनीयꣳशस्यंविहव्यꣳ शस्यमगस्त्यस्य कयाशुभीयꣳशस्यमेतावद्वाअस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते यदि प्रातःसवने कलशोदीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन्यद्वै यज्ञस्यातिरिच्यते विष्णुतच्छिपिविष्टमभ्यतिरिच्यते तद्विष्णुः शिपिविष्टोतिरिक्तएवातिरिक्तं दधात्यथोअतिरिक्तेनैवातिरिक्तमाप्नोति (२) रुंधते यदिमध्यंदिने दीर्येत वषट्कारनिधनꣳ सामकुर्युर्वषट्कारोवै यज्ञस्यप्रतिष्ठा प्रतिष्ठामेवैनद्गमयंति यदि तृतीयसवनएतदेव—१९) [ एषामवैकान्नविꣳशतिश्च ] ॥ ५ ॥

षड्भिर्मासान्संपाद्याहरुत्सृजंति षड्ढि मासान्त्संपश्यंत्यर्धमासैर्मासान्त्संपाद्याहरुत्सृजंत्यर्धमासैर्हिमासान्त्संपश्यंत्यमावास्यया मासान्त्संपाद्याहरुत्सृजंत्यमावास्यया हि मासान्त्संपश्यंति पौर्णमास्या मासान्त्संपाद्याहरुत्सृजंति पौर्णमास्या हि मासान्त्संपश्यंति योवै पूर्णआसिंचति परासिंचति यः पूर्णादुदचति (१) प्राणमस्मिन्त्सदधाति यत्पौर्णमास्यामासान्त्संपाद्याहरुत्सृजंति संवत्सरायैव तत्प्राणं दधति तदनु सत्रिणः प्राणंति यदहर्नोत्सृजेयुर्यथादृतिरुपनद्धोविपतत्येवꣳ संवत्सरोविपतेदार्तिमार्छेयुर्यत्पौर्णमास्या मासान्त्संपाद्याहरुत्सृजंति संवत्सरायैव तदुदानं दधति तदनु सत्रिणउत्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



(२) अनंति नार्तिमार्छंति पूर्णमासेवै देवानाꣳ सुतोयत्पौर्णमास्यामासान्त्संपाद्याहरुत्सृजंति देवानामेव तद्यज्ञेन यज्ञं प्रत्यवरोहंति विवएतद्यज्ञं छिंदंति यत्षडहसंततꣳ संतमथाहरुत्सृजंति प्राजापत्यं पशुमालभंते प्रजापतिः सर्वादेवतादेवताभिरेव यज्ञꣳ संतन्वंति यंति वाएते सवनाद्येहः ( ३ ) उत्सृजंति तुरीयं खलु वाएतत्सवनं यत्सान्नाय्यं यत्सान्नाय्यं भवंति तेनैव सवनान्नयंति समुपहूय भक्षयंत्येतत्सोमपीथाह्येतर्हि यथायतनं वाएतेषाꣳ सवनभाजोदेवतागच्छंति येहरुत्सृजंत्यनुसवनं पुरोडाशान्निर्वपंति यथायतनादेव सवनभाजोदेवता अवरुंधतेष्टाकपालान्प्रातःसवनएकादशकपालान्माध्यंदिने सवने द्वादशकपालाꣳस्तृतीयसवने छंदाꣳस्येवाप्त्वा ( ४ ) अवरुंधते वैश्वदेवं चरुं तृतीयसवने निर्वपंति वैश्वदेवं वै तृतीयसवनं तेनैव तृतीयसवनान्नयंति— १५ ) [ उदचत्युदहरास्वापंचदशच ] ॥ ६ ॥ उत्सृज्यां ३ नोत्सृज्या ३ मितिमीमाꣳसंते ब्रह्मवादिनस्तद्वाहुरुत्सृज्यमेवेत्यमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुरेते हि यज्ञं वहतइति ते त्वावनोत्सृज्येइत्याहुर्ये अवांतरं यज्ञं भेजाते इति याप्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुरेषवै मासोविशरइति नादिष्टं ( १ ) उत्सृजेयुर्यदादिष्टमुत्सृजेयुर्यादृशे पुनः पर्याप्लावे मध्येषडहस्य संपद्येत षडहैर्मासान्त्संपाद्य यत्सप्तममहस्तस्मिन्नुत्सृजेयुस्तदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेयुरैंद्रं दधींद्राय मरुत्वते पुरोडाशमेकादशकपालं वैश्वदेवं द्वादशकपालमग्नेर्वैवसुमतः प्रातःसवनं यदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपंति देवतामेव तद्भागिनीं कुर्वंति ( २ ) सवनमष्टाभिरुपयंति यदैंद्रं दधि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भवतींद्रमेव तद्भागधेयान्नच्यावयंतींद्रस्य वै मरुत्वतोमाध्यंदिनꣳ सवनं यदिंद्राय मरुत्वते पुरोडा-
शमेकादशकपालं निर्वपंति देवतामेव तद्भागिनीं कुर्वंति सवनमेकादशभिरुपयंति विश्वेषां वै दे-
वानामृभुमतां तृतीयसवनं यद्वैश्वदेवं द्वादशकपालं निर्वपंति देवताएव तद्भागिनीः कुर्वंति सवनं-
द्वादशभिः (२) उपयंति प्राजापत्यं पशुमालभंते यज्ञोवै प्रजापतिर्यज्ञस्यानंनुसर्गायाभिवर्तइतः
षण्मासोब्रह्मसामं भवति ब्रह्म वा अभिवर्तोब्रह्मणैव तत्सुवर्गं लोकमभिवर्तयंतोयंति प्रतिकूल-
मिवहीतः सुवर्गोलोकइंद्रक्रतुं नआभर पितापुत्रेभ्योयथा । शिक्षानोअस्मिन्पुरुहूत यामनि जी-
वाज्ज्योतिरशीमहीति (४) अमुतआयताꣳ षण्मासोब्रह्मसामं भवत्ययं वै लोकोज्योतिः प्रजा-
ज्योतिरिममेव तल्लोकं पश्यंतोभिवदंतआयंति — २० ) [ आदिष्टंकुर्वंतिद्वादशभिरितिविꣳश-
तिश्च ] ॥ ७ ॥ देवानां वाअंतं जग्मुषामिंद्रियं वीर्यमपाक्रामत्तत्क्रोशेनावारुंधत तत्क्रोश-
स्य क्रोशत्वं यत्क्रोशेन चात्वालस्यांते स्तुवंति यज्ञस्यैवांतं गत्वेंद्रियं वीर्यमवरुंधते सत्रस्यर्ध्याहव-
नीयस्यांते स्तुवंत्यग्निमेवोपद्रष्टारं कृत्वर्द्धिमुपयंति प्रजापतेर्हृदयेन हविर्धानेंतः स्तुवंति प्रेमाणमे-
वास्यगच्छंति श्लोकेन पुरस्तात्सदसः (१) स्तुवंत्यनुश्लोकेन पश्चाद्यज्ञस्यैवांतंगत्वा श्लोकभा-
जोभवंति नवभिरध्वर्युरुद्गायति नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधाति सर्वाऐंद्रियोभवंति-
प्राणेष्वेवेंद्रियं दधत्यप्रतिहृताभिरुद्गायति तस्मात्पुरुषः सर्वाण्यन्यानि शीर्ष्णोंगानि प्रत्यंचति शिरएव
न पंचदशꣳ रथंतरं भवतींद्रियमेवावरुंधते सप्तदशं (२) बृहदन्नाद्यस्यावरुध्याअथो प्रैव तेन जा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यंतएकाविꣳशं भद्रं द्विपदासु प्रतिष्ठित्यै पत्नयउपगायंति मिथुनत्वाय प्रजात्यै प्रजापतिः प्रजाअसृजत सोकामयतासामहꣳ राज्यं परीयामितितासाꣳ राजनेनैव राज्यं पर्यैत्तद्राजनस्य राजनत्वं यद्राजनं भवति प्रजानामेवतद्यजमानाराज्यं परियंति पंचविꣳशं भवतिप्रजापतेः (३) आस्यै पंचभिस्तिष्ठंतः स्तुवंति देवलोकमेवाभिजयंति पंचभिरासीनामनुष्यलोकमेवाभिजयंति दश संपद्यंतेदशाक्षरा विराडन्नं विराड्विराजेवान्नाद्यमवरुंधते पंचधाविनिषद्य स्तुवंति पंचदिशोदिक्ष्वेव प्रतितिष्ठंत्यैकैकया स्तुतया समायंति दिग्भ्यएवान्नाद्यꣳ संभरंति ताभिरुद्गातोद्गायति दिग्भ्यएवान्नाद्यं (४) संभृत्यतेजआत्मन्दधते तस्मादेकः प्राणः सर्वाण्यंगान्यवत्यथो यथा सुपर्णउत्पतिष्यञ्छिरउत्तमंकुरुतएवमेव तद्यजमानाः प्रजानामुत्तमाभवंत्यासंदीमुद्गातारोहति साम्राज्यमेव गच्छंति प्लेंखꣳ होतानाकस्यैव पृष्ठꣳ रोहंति कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छंत्येतावंतोवै देवलोकास्तेष्वेव यथापूर्वंप्रति (५) तिष्ठंत्यथो आक्रमणमेवतत्सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै —११)
[ सदसःसप्तदशंप्रजापतेरन्नाद्यंप्रत्येकादशच ] ॥ ८ ॥ अर्क्येण वैसहस्रशः प्रजापतिः प्रजाअसृजत ताभ्यइलांदेनेरांलूतामवारुंधयदर्क्यंभवतिप्रजाएव तद्यजमानाः सृजंतइलांदं भवति प्रजाभ्य एव सृष्टाभ्यइरां लूतामवरुंधते तस्माद्याꣳ समाꣳ सत्रꣳ समृद्धं क्षोधुकास्ताꣳ समां प्रजाइषꣳह्या सामूर्जमाददतेयाꣳ समां व्यृद्धमक्षोधुकास्ताꣳ समां प्रजाः (१) नह्यासामिषमूर्जमाददतउत्कोदंकुर्वतेयथाबंधान्मुमुचानाउत्क्रोदंकुर्वत एवमेव तद्यजमानादेवबंधान्मुमुचानाउत्कोदं कुर्वतइषमूर्जमात्मन्दधाना

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वाणः शततंन्तुर्भवति शतायुः पुरुषः शतेंद्रिय आयुष्येवेंद्रिये प्रतितिष्ठंत्याजिंधावंत्यनभिजितस्याभिजित्यै दुंदुभीन्त्समाघ्नंति परमा वाएषा वाग्यादुंदुभौ परमामेव (२) वाचमवरुंधते भूमिदुंदुभिमाघ्नंति यैवेमां वाक्प्रविष्टातामेवावरुंधतेथो इमामेव जयंतिसर्वावाचोवदंति सर्वासां वाचामवरुध्या आर्द्रेचर्मन्व्यायच्छेते इंद्रियस्यावरुध्याआन्यः क्रोशति प्रान्यः शंसति यआक्रोशति पुनात्येवैनान्त्सयः प्रशंसंति पूतेष्वेवान्नाद्यं दधात्यृषिकृतं च(३) वाएते देवकृतं च पूर्वैर्मासैरवरुंधते यद्भूतेच्छदाः सामानि भवंत्युभयस्यावरुध्यै यंति वाएते मिथुनाद्ये संवत्सरमुपयंत्यंतर्वेदिमिथुनौ संभवतस्तेनैव मिथुनान्नयंति — ३०) [ प्रजाएवचत्रिंशच्च ] ॥९॥ चर्मावभिंदंति पाप्मानमेवैषामवभिंदंति माप रात्सीर्माति व्यात्सीरित्याह संवृत्यै वैषां पाप्मानमवभिंदंत्युदकुंभानधिनिधाय दास्योमार्जालीयं परिनृत्यंति पदोनिघ्नतीरिदं मधुं गायंत्योमधुवै देवानां परममन्नाद्यं परममेवान्नाद्यमवरुंधते पदोनिघ्नंति महीयामेवैषुदधति — ४९) [ चर्मैकान्नपंचाशत् ] ॥ १० ॥ पृथिव्यै स्वाहांतरिक्षाय स्वाहा दिवे स्वाहा संप्लोष्यते स्वाहा संप्लवमानाय स्वाहा संप्लुताय स्वाहा मेघायिष्यते स्वाहा मेघायते स्वाहा मेघिताय स्वाहा मेघाय स्वाहा नीहाराय स्वाहा निहाकायै स्वाहा प्रासचाय स्वाहा प्रचलाकायै स्वाहा विद्योतिष्यते स्वाहा विद्योतमानाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रंस्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहाभिवर्षते स्वाहा परिवर्षते स्वाहा संवर्षते (१) स्वाहानुवर्षते स्वाहा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शीकायिष्यते स्वाहा शीकायते स्वाहा शीकिताय स्वाहा प्रोषिष्यते स्वाहा प्रुष्णते स्वाहा परिप्रुष्णते स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा विप्लोष्यते स्वाहा विप्लवमानाय स्वाहा विप्लुताय स्वाहा तप्स्यते स्वाहा तपते स्वाहोग्रमातपते स्वाहर्ग्भ्यः स्वाहा यजुर्भ्यः स्वाहा सामभ्यः स्वाहाङ्गिरोभ्यः स्वाहा वेदेभ्यः स्वाहा गाथाभ्यः स्वाहा नाराशꣳसीभ्यः स्वाहा रैभीभ्यः स्वाहा (२) सर्वस्मै स्वाहा—२) [ संवर्षते स्वाहा द्वे च ] ॥ ११ ॥ दत्वते स्वाहा दन्तकाय स्वाहा प्राणिने स्वाहा प्राणाय स्वाहा मुखवते स्वाहा मुखाय स्वाहा नासिकवते स्वाहा नासिकाय स्वाहाक्षण्वते स्वाहानक्षिकाय स्वाहा कर्णिने स्वाहा कर्णकाय स्वाहा शीर्षण्वते स्वाहा शीर्षकाय स्वाहा पद्वते स्वाहापादकाय स्वाहा प्राणते स्वाहाप्राणते स्वाहा वदते स्वाहावदते स्वाहा पश्यते स्वाहापश्यते स्वाहा शृण्वते स्वाहाशृण्वते स्वाहा मनस्विने स्वाहा (१) अमनसे स्वाहा रेतस्विने स्वाहारेतस्काय स्वाहा प्रजाभ्यः स्वाहाप्रजननाय स्वाहा लोमवते स्वाहालोमकाय स्वाहा त्वचे स्वाहात्वक्काय स्वाहा चर्मण्वते स्वाहाचर्मकाय स्वाहा लोहितवते स्वाहालोहिताय स्वाहा माꣳसन्वते स्वाहामाꣳसकाय स्वाहा स्नावभ्यः स्वाहास्नावकाय स्वाहास्थन्वते स्वाहानस्थिकाय स्वाहामज्जन्वते स्वाहामज्जकाय स्वाहाङ्गिने स्वाहानङ्गाय स्वाहात्मने स्वाहानात्मने स्वाहा (२) सर्वस्मै स्वाहा—२) [ स्वाहा स्वाहा द्वे च ] ॥ १२ ॥ कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै मह्यꣳ संनत्या अमुष्मै कामायायुषे त्वा प्राणाय त्वापानाय त्वा व्यानाय त्वा व्युष्ट्यै

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषायत्वा राद्घोषाय त्वा प्रच्युत्यै त्वा — ३८ ) [ कौष्टात्रिꣳशत् ] ॥ १३ ॥ अग्नये गायत्राय त्रिवृतेराथंतराय वासंतायाष्टाकपालइंद्राय त्रैष्टुभाय पंचदशाय बार्हताय ग्रैष्मायैकादशकपालोविश्वेभ्योदेवेभ्योजागतेभ्यः सप्तदशेभ्योवैरूपेभ्योवार्षिकेभ्योद्वादशकपालोमित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या बृहस्पतये पाङ्क्तायत्रिणवाय शाक्कराय हैमंतिकाय चरुः सवित्रआतिच्छंदसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय द्वादशकपालोदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोनुमत्यै चरुः कायएककपालः— ४७ ) [ अग्नयेसप्तचत्वारिꣳशत् ] ॥ १४ ॥ योवाअग्नावग्निः प्रह्रियते यश्चसोमोराजा तयोरेषआतिथ्यं यदग्नीषोमीयोथैषरुद्रोयश्चीयते यत्संचितेग्नावेतानि हवीꣳषि न निर्वपेदेषएव रुद्रोशांतउपोत्थाय प्रजां पशून्यजमानस्याभिमन्येत यत्संचितेग्नावेतानि हवीꣳषि निर्वपति भागधेयेनैवैनꣳ शमयति नास्यरुद्रोशांतः ( १ ) उपोत्थायप्रजांपशूनभिमन्यते दशहवीꣳषि भवंति नव वै पुरुषेप्राणानाभिर्दशमी प्राणानेव यजमाने दधात्यथोदशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठत्यृतुभिर्वा एषछंदोभिः स्तोमैः पृष्ठैश्चेतव्यइत्याहुर्यदेतानि हवीꣳषि निर्वपत्यृतुभिरेवैनं छंदोभिः स्तोमैः पृष्ठैश्चिनुते दिशः सुषुवाणेन ( २ ) अभिजित्याइत्याहुर्यदेतानि हवीꣳषि निर्वपति दिशामभिजित्याएतयावाइंद्रदेवाअयाजयन्तस्मादिंद्रसवएतया मनुंमनुष्यास्तस्मान्मनुसवोयथेंद्रोदेवानां यथा मनुर्मनुष्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



णामेवं भवति यएवं विद्वानेतयेष्ट्या यजंते दिग्वंतोः पुरोनुवाक्याभवंति सर्वासां दिशामभिजित्यै— ४१) [ सुषुवाणेनैकंचत्वारिंशच्च ] ॥ १५ ॥ यः प्राणतोनिमिषतोमहित्वैकइद्राजाजगतोबभूव । यईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम । उपयामगृहीतोसि प्रजापतये त्वा जुष्टंगृह्णामि तस्य ते द्यौर्महिमा नक्षत्राणि रूपमादित्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा— ३८) [ द्यौऽष्टात्रिंशत् ] ॥ १६ ॥ यआत्मदाबलदायस्य विश्वउपासते प्रशिषं यस्य देवाः । यस्य छायामृतं यस्य मृत्युः कस्मैदेवाय हविषा विधेम । उपयामगृहीतोसि प्रजापतये त्वा जुष्टंगृह्णामि तस्यतेपृथिवी महिमौषधयोवनस्पतयोरूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा— ३९) [ यएकान्नचत्वारिंशत् ] ॥ १७ ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामास्मिन्राष्ट्रे राजन्यइषव्यः शूरोमहारथोजायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरंधिर्योषाजिष्णूरथेष्ठाः सभेयोयुवास्य यजमानस्य वीरोजायतां निकामेनिकामे नः पर्जन्योवर्षतु फलिन्योनओषधयः पच्यंतां योगक्षेमोनः कल्पतां —४१) [ ऐकंचत्वारिंशत् ] ॥ १८ ॥ आक्रान्वाजीपृथिवीमग्निं युजमकृत वाज्यर्वाक्रान्वाज्यंतरिक्षं वायुं युजमकृतवाज्यर्वाद्यां वाज्याक्रंस्तसूर्यं युजमकृतवाज्यर्वाग्निस्तेवाजिन् युङ्ङनुत्वारभे स्वस्ति मासंपारयवायुस्ते वाजिन् युङ्ङनुत्वारभे स्वस्ति मासं (१) पारयादित्यस्ते वाजिन् युङ्ङनुत्वारभेस्वस्ति मासं पारयप्राणधृगसि प्राणं मेदृꣳह व्यानधृगसि व्यानं मेदृꣳहापानधृगस्यपानं मेदृꣳह चक्षु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रसि चक्षुर्मयि धेहि श्रोत्रमसि श्रोत्रं मयि धेह्यायुरस्यायुर्मयिधेहि —४३ ) ( संत्रिचत्वारिꣳश- च ) ॥ १९ ॥ जनिबीजं वर्ष्टापर्जन्यः पक्तासस्यꣳ सुपिप्पलाओषधयः स्वधिचरणेयꣳ सूपसद नोग्निः स्वध्यक्षमंतरिक्षꣳ सुपावः पवमानः सूपस्थानाद्यौः शिवमसौ तपन् यथा पूर्वमहोरात्रे पंचद शिनोर्धमासास्त्रिꣳशिनोमासाः कॢप्ताऋतवः शांतः संवत्सरः —३१ ) [ जइयेकंत्रिꣳशत् ] ॥२०॥ आग्नेयोष्टाकपालः सौम्यश्चरुः सावित्रोष्टाकपालः पौष्णश्चरूरौद्रश्चरुरग्नये वैश्वानराय द्वादशकपा- लोमृगाखरे यदि नागच्छेदग्नयेꣳहोमुचेष्टाकपालः सौर्यं पयोवायव्यआज्यभागः —२४ ) [ आग्नेय श्चतुर्विꣳशतिः ] ॥ २१ ॥ अग्नयेꣳहोमुचेष्टाकपालइंद्रायाꣳहोमुचएकादशकपालोमित्रावरुणाभ्या मागोमुग्भ्यां पयस्यावायोसावित्रआगोमुग्भ्यां चरुरश्विभ्यामागोमुग्भ्यां धानामरुद्भ्यएनोमुग्भ्यः स प्तकपालोविश्वेभ्योदेवेभ्यएनोमुग्भ्योद्वादशकपालोनुमत्यै चरुरग्नये वैश्वानरायद्वादशकपालोद्यावा- पृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः —३० ) [ अग्नयेत्रिꣳशत् ] ॥ २२ ॥ अग्नये समनमत्पृ- थिव्यै समनमद्यथाग्निः पृथिव्यासमनमदेवं मह्यं भद्राः संनतयः संनमंतु वायवे समनमदंतरिक्षाय समनमद्यथा वायुरंतरिक्षेण सूर्याय समनमद्दिवे समनमद्यथा सूर्योदिवा चंद्रमसे समनमन्नक्षत्रेभ्यः समनमद्यथा चंद्रमानक्षत्रैर्वरुणाय समनमदद्भ्यः समनमद्यथा ( १ ) वरुणोद्भिः साम्ने समनमदृचे- समनमद्यथा सामर्चा ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण राज्ञे समनमद्विशे समनमद्य था राजा विशारथाय समनमदश्वेभ्यः समनमद्यथा रथोश्वैः प्रजापतये समनमद्भूतेभ्यः समनमद्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



था प्रजापतिर्भूतैः समनमदेवं मह्यं (२) भद्राः संनतयः संनमंतु —४ ) [ यथामह्यंचत्त्वारिंच ] ॥ २३ ॥ ये ते पंथानः सवितः पूर्व्यासोरेणवोविततांअंतरिक्षे । तेभिर्नोअद्यपथिभिः सुगेभीरक्षांचनोअधि च देव ब्रूहि । नमोग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमो वायवेंतरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि —४४ ) [ येचतुश्चत्वारिंशत् ) ॥ २४ ॥ योवाअश्वस्य मेध्यस्य शिरोवेदशीर्षण्वान्मेध्योभवत्युषा वाअश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणश्चंद्रमाः श्रोत्रं दिशः पादाअवांतरदिशाः पर्शवोहोरात्रेनिमेषोर्धमासाः पर्वाणि मासाः संधानान्यृतवोंगानि संवत्सरआत्मा रश्मयः केशानक्षत्राणि रूपं तारकाअस्थानि नभोमांसान्योषधयोलोमानि वनस्पतयोवालाअग्निर्मुखं वैश्वानरोव्यात्तं ( १ ) समुद्रउदरमंतरिक्षं पायुर्द्यावापृथिवी आंडौ ग्रावा शेपः सोमोरेतोयज्जंजभ्यते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा अश्वस्य जायमानस्य महिमापुरस्ताज्जायते रात्रिरेनं महिमापश्चादनुजायतएतौ वै महिमानावश्वमभितः संबभूवतुर्हयोदेवानवहद् ( २ ) अर्वासुरान्वाजीगंधर्वानश्वोमनुष्यान्समुद्रोवाअश्वस्य योनिः समुद्रः — १२) [ व्यात्तमवहद्वादशच ] ॥ २५ ॥ गावो- ( ३१३ ) गावः ( १०२ ) प्रथमे ( ८४ ) समान्यो ( १०२ ) यदि ( ११९ ) षड्ढै ( २१५ ) रुत्सृज्यं ३ ( २२० ) देवाना ( २६१ ) मक्यैग्र ( १८० ) चर्म ( ४९ ) पृथिव्यै ( १०२ ) दत्वते

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

ॐम्

# कृष्णयजुर्वेदस्य

## तैत्तिरीयसंहिता

बोडसोपनामक महामहोपाध्याय राजारामशास्त्रि गोरेइत्युपाह्वशिवरामशर्मभ्यांसंशोधिता.

अयंग्रन्थः

तत्वविवेचकग्रन्थप्रसारकसमित्या

प्रेरितेन

तुकारामतात्याभिख्येन

अंकयित्वाप्रसिद्धिंप्रापितः

सच

मुंबय्यां

गणपतकृष्णाजीमुद्रायंत्रालयाधिपतिना आत्मारामकान्होबाभिख्येन

अंकितः

शकाब्दाः १८१०. ख्रिस्ताब्दाः १८८८.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.